निधायमध्येवस्त्रंद्वादशप्रातियुण्ये ॥ सुश्वेतेनतस्यमध्येमहेशंलिंगाकारंपीठयुक्तंप्रपूज्यम् ॥ ९७ ॥ एवंकृत्वाबाणमुख्यादितीशादत्त्वादत्त्वापंचगंधाष्ट
गंधम् ॥ पुष्पैःपत्रैःश्रीतिलैरक्षतैश्चतिलोन्मिश्रैःकेवलैश्चप्रपूज्य ॥ ९८ ॥ धूपंदत्त्वाविधिवत्संप्रयुक्तंदीपंदत्त्वाचोक्तमेवोपहारम् ॥ पूजाशेषंतेसमाप्याथसर्वे
गीतंनृत्यंतत्रतत्रापिचक्रुः ॥ ९९ ॥ अथास्मिन्नंतरेगौतमस्यप्राप्तःशिष्यःशंकरात्मेतिनाम्ना ॥ १०० ॥ उन्मत्तवेशोदिग्वासाअनेकावृतिमाश्रितः ॥
क्वचिद्विजातिप्रवरःक्वचिच्चंडालसन्निभः ॥ १०१ ॥ क्वचिच्छूद्रसमोयोगीतापसःक्वचिदप्युत ॥ गर्जत्युत्पततेचैवनृत्यतिस्तौतिगायति ॥ १०२ ॥ रोदि
तिशृणुतेव्यक्तंपतत्युत्तिष्ठतिक्वचित् ॥ शिवज्ञानैकसंपन्नःपरमानंदनिर्भरः ॥१०३॥ संप्राप्तोभोज्यवेलायांगौतमस्यांतिकंययौ ॥ वुभुजेगुरुणासाकंक्वचि
दुच्छिष्टमेवच ॥ १०४ ॥ क्वचिल्लेहतितत्पात्रंतूष्णीमेवाभ्यगात्क्वचित् ॥ हस्तंगृहीत्वैवगुरोःस्वयमेवाभुनक्क्वचित् ॥ १०५ ॥ क्वचिद्गृहांतरेमूत्रंक्वचि
त्कर्दमलेपनम् ॥ सर्वेदातंगुरुर्द्दृष्ट्वाकरमालंब्यमंदिरम् ॥१०६॥ प्रवेश्यस्वीयपीठेतमुपवेश्याभ्यभोजयत् ॥ स्वयंतदस्यपात्रेणवुभुजेगौतमोमुनिः ॥१०७॥
तस्यचित्तंपरिज्ञातुंकदाचिदथसुंदरी ॥ अहल्याशिष्यमाहूयभुंक्ष्वेत्युक्त्वाथसाशुभा ॥ १०८ ॥ सौवर्णेभाजनेचान्नंनिधायचपकांतरे ॥ पानादिकमथोद
त्वाएकस्मिन्पावकंपुनः ॥ १०९ ॥ निधायांगारनिचयंकंटकानांचयंपरे ॥ निधायभुंक्ष्वभुंक्ष्वेतिसचापिवुभुजेमुनिः ॥ ११० ॥ यथापपौहिपानीयंतथाव
ह्निमपिद्विजः ॥ कंटकानपिभुक्त्वासयथापूर्वमतिष्ठत ॥१११॥ पुराहिमुनिकन्याभिराहूतोभोजनायच ॥ दिनेदिनेतत्प्रदत्तंलोष्ठमंवुचगोमयम् ॥११२ ॥
कर्दमंकाष्ठदंडंचभुक्त्वाप्रीत्याथहर्षितः ॥ एतादृशोमुनिरसौचंडालसदृशाकृतिः ॥११३॥ सुजीर्णोपानहौहस्तेगृहीत्वातुतथाकरे ॥ अंत्यजोचितभाषाभि
र्वृषपर्वाणमभ्यगात् ॥ ११४ ॥ वृषपर्वेशयोर्मध्येदिग्वासाःसमतिष्ठत ॥ वृषपर्वातमज्ञात्वापीडयित्वाशिरोऽच्छिनत् ॥११५॥ हतेतस्मिन्द्विजश्रेष्ठेजगदेत
च्चराचरम् ॥ अतीवकलुषमभवत्तत्रस्थामुनयस्तथा ॥११६॥ गौतमस्यमहाशोकःसंजातःसुमहात्मनः ॥ निर्ययौचक्षुषोर्वारिशोकंसंदर्शयन्निव ॥११७॥
गौतमःसर्वदैत्यानांसंनिधौवाक्यमुक्तवान् ॥ किमनेनकृतंपापंयेनच्छिन्नमिदंशिरः ॥११८॥ ममप्राणाधिकस्येहसर्वदाशिवयोगिनः ॥ ममापिमरणंसत्यं
शिष्यरूपीयतोगुरुः ॥११९॥ शैवानांधर्मयुक्तानांसर्वदाशिववर्तिनाम् ॥ मरणंयत्रदृष्टंस्यात्तत्रनोमरणंध्रुवम् ॥ १२० ॥ ॥ शुक्रउवाच ॥ ॥ एनंसंजीव
यिष्यामिममगोत्रंशिवप्रियम् ॥ किमसौम्रियतेब्रह्मन्पश्यमेतपसोबलम् ॥ १२१ ॥ इतिवादिनिविप्रेंद्रेगौतमोऽपिममारह ॥ तस्मिन्मृतेऽथशुक्रोऽ
पिप्राणांस्तत्यायोगतः ॥ १२२ ॥ तस्यापिहतमाज्ञायप्रह्लादादानवेश्वराः ॥ सर्वेमृताःक्षणेनैवतदद्भुतमिवाभवत् ॥ १२३ ॥ मृतमा



१ एका एकस्मिन्हस्ते अन्योपानदन्यस्मिन्करे—इत्यर्थसंगतिर्यथाकथंचिद्बोद्धव्या । २ शिष्यच्छद्मा—इ० पा० । ३ प्रल्हादाद्याः दानवेश्वराः इत्यर्थः ।

सीदथबलंतस्यबाणस्यधीमतः ॥ अहल्याशोकसंतप्तारुरोदोच्चैःपुनःपुनः ॥ १२४ ॥ गौतमेनमहेशस्यपूजयापूजितोविभुः ॥ वीरभद्रोमहा
योगीसर्वंदृष्ट्वाचुकोपह ॥ १२५ ॥ अहोकष्टमहोकष्टंमाहेशावहवोमृताः ॥ शिवंविज्ञापयिष्यामितेनोक्तंकरवाण्यहम् ॥ १२६ ॥ इति
निश्चित्यगतवान्मंदराचलमव्ययम् ॥ नमस्कृत्वाविरूपाक्षमिदंसर्वमथोक्तवान् ॥ २७ ॥ ब्रह्महरीस्थितौतत्रदृष्ट्वाप्राहशिवोवचः ॥ मद्भक्तैःसाहसंकर्मकृतं
दृष्ट्वावरप्रदः ॥ २८ ॥ गत्वापश्यामहेविष्णोयुवामप्यागमिष्यथ ॥ अथेशोवृषमारुह्यवायुनाधूतचामरः ॥ १२९ ॥ नंदिकेनसुवेषेणधृतेछत्रेतिशोभने ॥
सुश्वेतहेमदंडेचनान्ययोगेधृतेविभोः ॥१३०॥ महेशानुमतिंलब्ध्वाहरिर्नागांतकेस्थितः ॥ आरक्तनीलछत्राभ्यांशुशुभेलक्ष्यकौस्तुभः ॥ ३१ ॥ शिवानु
मत्याब्रह्मापिहंसारूढोभवत्तदा ॥ इंद्रगोपप्रभाकारच्छत्राभ्यांशुशुभेविधिः ॥ ३२ ॥ इंद्रादिसर्वदेवाश्चस्वस्ववाहनसंयुताः ॥ अथतेनिर्ययुःसर्वेनानावाद्या
नुमोदिताः ॥ ३३ ॥ कोटिकोटिगणाकीर्णागौतमस्याश्रमंगताः ॥ ब्रह्मविष्णुमहेशानांदृष्ट्वातत्परमाद्भुतम् ॥ ३४ ॥ स्वभक्तंजीवयामासवामकोणनिरीक्ष
णात् ॥ शंकरोगौतमंप्राहतुष्टोऽहंतेवरंवृणु ॥ ३५ ॥ ॥ गौतमउवाच ॥ ॥ यदिप्रसन्नोदेवेशयदिदेयोवरोमम ॥ त्वल्लिंगार्चनसामर्थ्यंनित्यमस्तुमहे
श्वर ॥ ३६ ॥ वृतमेतन्मयादेवशृणुष्वैतत्त्रिलोचन ॥ ममशिष्योमहाभागोहेयाहेयादिवर्जितः ॥ ३७ ॥ प्रेक्षणीयंममत्वेननचपश्यतिचक्षुषा ॥ नचघ्राणेन
घ्रातव्यंनदातव्यंनचेतरत् ॥ ३८ ॥ इतिबुद्ध्वातथाकुर्वन्सहियोगीमहायशाः ॥ उन्मत्तविकृताकारःशंकरात्मेतिकीर्तितः ॥ ३९ ॥ नकश्चित्तंप्रातिद्वि
ष्यान्नचतंहिंसयेदिति ॥ एतन्मेदीयतांदेवएतेषाममृतिस्तथा ॥ १४० ॥ ॥ श्रीभगवानुवाच ॥ ॥ आकल्पमेतेजीवंतुततोमुक्तिंभजंतुच ॥ त्वयाकृ
तमिदंवेश्मविस्तृतंविकृतंशुभम् ॥ ४१ ॥ तिष्ठामःक्षणमात्रंतुततोयास्याममंदिरम् ॥ ॥ गौतमउवाच ॥ ॥ अयोग्यंप्रार्थयामीशह्यर्थीदोषंनपश्यति
॥ ४२ ॥ ब्रह्माद्यलभ्यंदेवेशदीयतांयदिरोचते ॥ अथेशोविष्णुमालोक्यगृहीत्वातुकरंहरेः ॥ ४३ ॥ प्रहसन्नंबुजाभाक्षमित्युवाचसदाशिवः ॥ म्लानोदरो
सिगोविंददेयंतेभोजनंकिमु ॥ ४४ ॥ स्वयंप्रविश्ययदिवास्वयंभुंक्ष्वस्वगेहवत् ॥ गच्छवापार्वतीगेहंयाकुक्षिंपूरयिष्यति ॥ ४५ ॥ इत्युक्त्वातत्करालंबी
एकांतमगमद्विभुः ॥ आदिश्यनंदिनंदेवोद्वाराध्यक्षंयथोक्तवत् ॥४६॥ गौतमंसमुवाचायमुत्तरंविष्णुभाषणम् ॥ ॥ सदाशिवउवाच ॥ ॥ संपादयान्नंसर्वेपांभो
कुकामावयंमुने ॥ ४७ ॥ इत्युक्त्वैकांतमगमद्वासुदेवेनशंकरः ॥ मृदुशय्यांसमारुह्यशयितौदेवतोत्तमौ ॥ ४८ ॥ अन्योन्यंभाषणंकृत्वाप्रोत्तस्थतुरुभा
वपि ॥ गत्वातटाकंगंभीरंस्नास्यंतौदेवसत्तमौ ॥ ४९ ॥ करांबुपानमन्योन्यंपृथक्कृत्वोभयत्रच ॥ मुनयोराक्षसाश्चैवजलक्रीडांप्रचक्रिरे ॥ १५० ॥ अथवि

१ प्रहसन्मुंक्ष्वकंजाक्ष–इ० पा० ।

ष्णुर्महेशश्चजलपातानिशीघ्रतः ॥ चक्रतुःशंकरःपद्मकिंजल्कांजलिनाहरेः ॥१५१॥ अवाकिरन्मुखेतस्यपद्मोत्फुल्लविलोचने ॥ नेत्रेकेशरसंपातान्न्यमील
यतकेशवः ॥ ५२ ॥ अत्रांतरेहरेःस्कंधमारुरोहमहेश्वरः ॥ हर्युत्तमांगंवाहुभ्यांगृहीत्वासंन्यमज्जयत् ॥ ५३ ॥ उन्मज्जायित्वाचपुनःपुनश्चापिपुनःपुनः ॥
पीडितःसहरिःसूक्ष्मंपातयामासशंकरम् ॥५४॥ अथपादौगृहीत्वातुआचकर्षचभ्रामयत् ॥अताडयद्धरेर्वक्षःपातयामासचाच्युतम् ॥५५॥ अथोत्थितोहरि
स्तोयमादायांजलिनाततः ॥ अवाकिरदथोशंभुमथविष्णुमथोहरः ॥ ५६ ॥ जलक्रीडैवमभवदथचर्षिगणांतरे ॥ जलक्रीडासंभ्रमेणविस्रस्तजटबं
धनाः ॥ ५७ ॥ अथसंभ्रमतस्तेषामन्योन्यजटबंधनम् ॥ इतरेतरबद्धासुजटासुचमुनीश्वराः ॥ ५८ ॥ शक्तिमंतोऽशक्तिमतःआकर्षंतिचसव्य
थम् ॥ पातयंतोन्यतश्चापिक्रोशतोरुदतस्तथा ॥ १५९ ॥ एवंप्रवृत्तेतुमुलेसंभूतेतोयकर्म्मणि ॥ आकाशेनारदोहृष्टोननर्तचननादच ॥ १६० ॥
विपंचींनादयन्वाद्यंललितांगीतिमुज्जगौ ॥ सुगीत्याललितायास्तुअगायतविधादश ॥ ६१ ॥ शुश्रावगीतंमधुरंशंकरोलोकभावनः ॥ स्वयंगातुं
हिललितंमंदंमंदंप्रचक्रमे ॥ ६२ ॥ स्वयंगायतिदेवेशेमिश्रामंगलकैशिकी ॥ नारदेनृत्यमानेतुगायतिस्वरभेदिनि ॥ ६३ ॥ स्वरंध्रुवंसमादा
यसर्वलक्षणसंयुतम् ॥ स्वधारामृतसंयुक्तंगानेनैवमथोजयत् ॥ ६४ ॥ वासुदेवोमर्दलंचकराभ्यामिदमाहनत् ॥ अवगाहंश्चतुर्वक्रस्तुंबुरुर्मुखरोबभौ॥६५॥
तानकागौतमाद्यास्तुतूष्णींगातुंचवायुतः ॥ गायकेमधुरंगीतंहनूमतिकपीश्वरे ॥६६॥ म्लानमम्लानमभवत्कुशाःपुष्टास्तदाभवन्॥स्वांस्वांगीतिमतःसर्वे
तिरस्कृत्यैवमूर्च्छिताः ॥ ६७ ॥ तूष्णींसर्वेसमभवन्देवर्षिगणदानवाः ॥ एकःसहनुमान्गाताश्रोतारःसर्वएवते ॥ ६८ ॥ मध्याह्नकालवितते भोज
नावसरेसति ॥ दुकूलयुगमाधत्तशृण्वन्गीतिंमहेश्वरः ॥ ६९ ॥ पीतवस्त्रद्वयंविष्णुरारक्तंचतुराननः ॥ स्वस्वार्हाण्यथसर्वेऽपिकृत्यंकृत्वापिकालि
कम् ॥ १७० ॥ स्वंस्वंवाहनमारुह्यनिर्गताःसर्वदेवताः ॥ गानप्रियोमहेशस्तुजगादप्लवगेश्वरम् ॥ ७१ ॥ प्लवगत्वंमयाज्ञप्तोनिःशंकंवृषमारुह ॥
ममचाभिमुखोभूत्वागायस्वाशेषगायनम् ॥ ७२ ॥ अथाहकपिशार्दूलोभगवंतंमहेश्वरम् ॥ वृषभारोहसामर्थ्यंतवनान्यस्यविद्यते ॥ ७३ ॥ तववाह
नमारुह्यपातकीस्यामहंविभो ॥ मामेवारुहदेवेशविहंगःशिववाहनः ॥ ७४ ॥ तवचाभिमुखंगानंकरिष्यामिविलोकय ॥ अथेश्वरोहनूमंतमारुरोहवृषं
यथा ॥ ७५ ॥ आरूढेशंकरेदेवेहनूमान्कंधराशिरः ॥ छित्त्वात्वचंपरावृत्यमुखंगायतिपूर्ववत् ॥ ७६ ॥ शृण्वन्गीतिसुधांशंभुर्गौतमस्यगृहंगतः ॥
सर्वेचाप्यागतास्तत्रदेवर्षिगणदानवाः ॥७७॥ मूर्च्छितागौतमेनाथभोजनावसरेसति ॥ यज्ञसुकंदारसंभूतगृहोपकरणादिकम् ॥ ७८ ॥ प्ररूढमभवत्सर्वं

गायमानेहनूमति ॥ तस्मिन्गानेसमस्तानांचित्रदृष्टिरतिष्ठत ॥ १७९ ॥ द्विबाहुरीशस्यपदाभिवंदनःसमस्तगात्राभरणोपपन्नः ॥ प्रसन्नमूर्तिस्तरुणःसुम
ध्येविन्यस्तमूर्द्धांजलिभिःसुरैःस्तुतः ॥ १८० ॥ शिरःकराभ्यांपरिगृह्यशंकरोहनूमतःपूर्वमुखंचकार ॥ पद्मासनासीनहनूमतांजलौनिधायपादंत्वपरंमुखे
च ॥ ८१ ॥ पादांगुलीभ्यामथनासिकांविभुःस्नेहेनजग्राहचमंदमंदम् ॥ स्कंधेमुखेत्वंसतलेचकंठेवक्षःस्थलेचस्तनमध्यमेहृदि ॥ ८२ ॥ ततश्चकुक्षा
वथनाभिमंडलेततोद्वितीयंनिदधातिचांजलौ ॥ शिरोगृहीत्वावनमय्यशंकरःपस्पर्शपृष्ठंचिबुकेनसध्वनि ॥ ८३ ॥ हारंचमुक्तापरिकल्पितंशिवोहनूमतः
कंठगतंचकारह ॥ अथविष्णुर्महेशानमिदंवचनमुक्तवान् ॥ ८४ ॥ हनूमतासमोनास्तिकृत्स्नब्रह्मांडमंडले ॥ श्रुतिदेवाद्यगम्यंहिपदंतवाकिलस्थि
तम् ॥ ८५ ॥ सर्वोपनिषदव्यक्तंत्वत्पदंकपिसर्वयुक् ॥ यमादिसाधनैर्योगैर्नक्षणंतेपदंस्थितम् ॥ ८६ ॥ महायोगिहृदंभोजेबलंस्वच्छंहनूमति ॥
वर्षकोटिसहस्रेषुतपःकृत्वातुदुष्करम् ॥ ८७ ॥ त्वद्रूपंनाभिजानातिकुतःपादंमुनीश्वराः ॥ अहोभाग्यंविचित्रंहिचपलोवानरोमृगः ॥ ८८ ॥
धत्तेपादयुगंचांगेयोगिहृद्यपिनक्षमम् ॥ मयावर्षसहस्रंतुसहस्राब्दंतथान्वहम् ॥ १८९ ॥ भक्त्यासंपूजितोऽपीशपादोनोदर्शितस्त्वया ॥ लोके
वादोहिसुमहाञ्छंभुर्नारायणप्रियः ॥ १९० ॥ हरिःप्रियस्तथाशंभोर्नतादृग्भाग्यमस्तिमे ॥ ॥ सदाशिवउवाच ॥ नत्वयासदृशोमह्यं
प्रियोस्तिभगवन्हरे ॥ ९१ ॥ पार्वतीवात्वयातुल्यानचान्योविद्यतेमम ॥ अथदेवायमहतेगौतमःप्रणिपत्यच ॥ ९२ ॥ व्यज्ञापयदमेयात्मन्दे
वैहिकरुणानिधे ॥ मध्याह्नोऽयंव्यतिक्रांतोभुक्तिवेलाखिलस्यच ॥ ९३ ॥ अथाचम्यमहादेवोविष्णुनासहितोविभुः ॥ प्रविश्यगौतमगृहंभो
जनायोपचक्रमे ॥ ९४ ॥ रत्नांगुलीयैरथनूपुराभ्यांदुकूलबंधेनतडित्सुकांच्या ॥ हारैरनेकैरथकंठनिष्कयज्ञोपवीतोत्तरवाससीच ॥ ९५ ॥ वि
लंबिचंचन्मणिकुंडलेनसुपुष्पधम्मिल्लवरेणदेवः ॥ पंचांगगंधस्यविलेपनेनबाह्वंगदैःकंकणकांगुलीयकैः ॥ ९६ ॥ इत्थंविभूषितःशिवोनिविष्टउत्तमा
सनेस्वसंमुखंहरिंतथान्यवेशयद्वरासने ॥ अन्योन्यसंमुखौस्थितौहरीशौदेवसत्तमौसुवर्णभाजनान्यथोददौसचापिगौतमः ॥ ९७ ॥ त्रिंशत्प्रभेदभक्ष्यकं
सुपायसंचतुर्विधंसुपक्वपाकजातकंशतद्वयंप्रकल्पितम् ॥ अपक्वपक्वमिश्रकंशतत्रयंप्रकल्पितंशतंशतंतथासुकंदशाककंतथासुनिः ॥ ९८ ॥
शाकादिसर्पिषान्वितंददौचपंचविंशतिंसुशर्करादिकंतथासुचूनदाडिमादिकम् ॥ मोचाफलंतुगोस्तनींसुखर्जुनागरंगकंजंबूफलंप्रियालुकंविकंकतंफलं ॥१६९॥
तथा ॥ ९९ ॥ एवमादीनिचान्यानिद्रव्याण्यर्प्ययथाविधि ॥ दत्वाचापोशनंविप्रोभुंजध्वमितिचाब्रवीत् ॥ २०० ॥ भुंजानेषुचस

१ पदाभिवंधनः–इ० पा० । २ कपिस्थितम्–इ० पा० ।

वैंबुव्यजनंसूक्ष्मवस्त्रजम् ॥ गौतमःस्वयमादायशिवविष्णूअवीजयत् ॥२०१॥परिहासमथोकर्तुंमियेपपरमेश्वरः॥ पश्यविष्णोहनूमंतंकथंभुंक्तेसवानरः॥२॥
वानरंपश्यतिहरौमंडकंविष्णुभाजने ॥ चिक्षेपमुनिसंपेषुपश्यतस्त्वपिमहेश्वरः ॥ ३ ॥ हनूमतेदत्तवांश्चस्वोच्छिष्टंपायसादिकम् ॥ त्वदुच्छिष्टमभोज्यं
तुतवैववचनाद्विभो ॥ ४ ॥ अनर्हममनैवेद्यंपत्रंपुष्पंफलंतथा ॥ मह्यंनिवेद्यसकलंकूपएवविनिक्षिपेत् ॥५॥ अभुक्तेत्वद्वचोनूनंभुक्तेचापिकृपातव ॥ ॥ स
दाशिवउवाच ॥ ॥ बाणलिंगेस्वयंभूतेचंद्रकांतेहृवस्थिते[1] ॥ ६ ॥ चांद्रायणसमंज्ञेयंशंभोर्नैवेद्यभक्षणम् ॥ भुक्तिवेलेपमधुनातद्वैरस्यंकथां
तरात् ॥ ७ ॥ भुक्त्वातुकथयिष्यामिनिर्विशंकंविभुंक्ष्वतत् ॥ अथासौजलसंस्कारंकृतवान्गौतमोमुनिः ॥ ८ ॥ आरक्तसुस्निग्धसुसूक्ष्मगात्राननेक
धाधौतसुशोपितांगान् ॥ तडागतोयैःकृतबीजघर्षितैर्विशोधितैस्तैःकरकानपूरयत् ॥ ९ ॥ नद्याःसैकतवेदिकांनवतरांसंच्छाद्यसूक्ष्मांबरैःशुद्धैःश्वे
ततरैरथोपरिघटांस्तोयेनपूर्णान्क्षिपेत् ॥ क्षिप्त्वानालकजातिमास्तपुटकंकंकोलकस्तूरिकाचूर्णंचन्दनचंद्ररश्मिविशदांमालांपुटांतांक्षिपेत् ॥ २१० ॥
यामस्यापिपुनश्चवारिवसनेनाशोध्यकुंभेक्षिपेचंद्रग्रंथिमथोनिधायबकुलांक्षिप्त्वातथापाटलाम् ॥ ११ ॥ शेफालीस्तवकमथोजलंचतत्रविन्यस्यअथ
मतएवतोयशुद्धिम् ॥ कृत्वाथोमृदुतरसूक्ष्मवस्त्रखंडेनावेष्ट्यत्सृणिकमुखंचसूक्ष्मचंद्रम् ॥ १२ ॥ अनातपप्रदेशेतुनिधायकरकानथ ॥ मंदवातस
मोपेतेसूक्ष्मव्यजनवीजिते ॥ १३ ॥ अथउर्वीशसलिलैःसिंचयेत्सृणिकामपि ॥ संस्कृत्वास्वाथतास्तत्रनरानार्योथवानृप ॥ १४ ॥ तत्कन्यावाक्षा
लितांगाधौतवस्त्राश्चवासह ॥ मधुपिंगलनिर्यासमसांद्रमगुरुद्रवम् ॥ १५ ॥ बाहुमूलेचकंठेचविलिप्यसांद्रमेवच ॥ मस्तकेजाप्यकंन्यस्यपंचगंध
विलेपनम् ॥ १६ ॥ पुष्पनद्धसुकेशास्तुताःशुभास्याःसुनिर्मलाः ॥ एवमेवोचितानार्यआत्तकुंकुमविग्रहाः ॥ १७ ॥ युवत्यश्चारुसर्वांग्योनितरां
भूषणैरपि ॥ एतादृग्वनिताभिर्वानरैर्वादापयेज्जलम् ॥ १८ ॥ तेऽपिप्रदानसमयेसूक्ष्मवस्त्रात्पवेष्टनम् ॥ अथवामकरेन्यस्यकरकंतत्रपश्य
हि ॥ १९ ॥ दोरिकान्यस्तमुन्मुच्यततस्तोयंप्रदापयेत् ॥ एवंसत्कारयामासगौतमोभगवान्मुनिः ॥ २२० ॥ महेशादिषुसर्वेषुभुक्तवत्सुमहात्मसु ॥
प्रक्षालितांघ्रिहस्तेषुगंधोद्वर्तितपाणिषु ॥ २१ ॥ तदासनसमासीनेदेवदेवेमहेश्वरे ॥ अथनीचसमासीनादेवाःसर्पिगणास्तथा ॥ २२ ॥ मणिपात्रेषुसंवेष्ट्य
पूगखंडान्सुधूपितान् ॥ अकोणवर्तुलान्स्थूलानसूक्ष्मानकृशानपि ॥ २३ ॥ श्वेतपत्राणिसंशोध्याक्षिप्त्वाकर्पूरखंडकम् ॥ चूर्णंचशंकरायाथनिवेदयति
गौतमे ॥ २४ ॥ गृहाणदेवतांबूलमित्युक्तवचनेमुनौ ॥ कपेगृहाणतांबूलंप्रयच्छममखंडकान् ॥ २५ ॥ उवाचवानरोनास्तिममशुद्धिर्महेश्वर ॥ अनेक



[1] ह्रविस्थिते–इ०पा० ।

फलभुक्त्वाद्वानरस्तुशुचिःकथम् ॥ २६ ॥ ॥ सदाशिवउवाच ॥ ॥ मद्वाक्यादखिलंशुद्ध्येन्मद्वाक्यादमृतंविषम् ॥ मद्वाक्यादखिलावेदामद्वाक्या
देवतादयः ॥ २७ ॥ मद्वाक्याद्धर्मविज्ञानंमद्वाक्यान्मोक्षउच्यते ॥ पुराणान्यागमाश्चैवस्मृतयोममवाक्यतः ॥ २८ ॥ अतोगृहाणतांबूलंममदद्याः
सुखंडकान् ॥ हरिर्वामकरेणादात्तांबूलंपूगखंडकम् ॥ २९ ॥ ततःपत्राणिसंगृह्यततःखंडान्समर्पयत् ॥ कर्पूरमग्रतोदत्तंगृहीत्वाभक्षयच्छिवः ॥ २३० ॥
देवेतुकृततांबूलेपार्वतीमंदराचलात् ॥ जयाविजययोर्हस्तंगृहीत्वायान्मुनेर्गृहम् ॥ ३१ ॥ देवपादौततोनत्वाविनम्रवदनाभवत् ॥ उन्नमय्यमुखंतस्या
इदमाहत्रिलोचनः ॥ ३२ ॥ त्वदर्थंदेवदेवेशिअपराधःकृतोमया ॥ यत्त्वांविहायभुक्तंहितथान्यच्छृणुसुंदरि ॥ ३३ ॥ अथस्वमंदिरेस्थाप्यदेवदेवविवर्जि
ते ॥ सर्वबंधविमुक्तेचमहदेनोमयाकृतम् ॥ ३४ ॥ क्षंतुमर्हसिदेवेशित्यक्तकोपाविलोकय ॥ नवभाषैवमुक्त्वासाअरुंधत्याहिनिर्ययौ ॥ ३५ ॥ निर्गच्छंतीं
मुनिर्ज्ञात्वादंडवत्प्रणनामच ॥ तदारभ्यमहेशायदंडप्रणतिसंस्तुतिम् ॥ ३६ ॥ कुर्यादुवाचचशिवागौतमत्वंकिमिच्छसि ॥ ॥ गौतमउवाच ॥ ॥ कृत
कृत्योस्मिदेवेशियदिदेयोवरोमम ॥ ३७ ॥ मन्मंदिरेमहाभागेभोक्तुमर्हसिसांप्रतम् ॥ ॥ देव्युवाच ॥ ॥ भोक्ष्यामितवगेहेहंशंकरानुमताम्मु
ने ॥ ३८ ॥ गत्वेशंगौतमोविप्रोलब्धानुज्ञःपुनर्गतः ॥ भोजयामासगिरिजांदेवींचारुंधतींतथा ॥ ३९ ॥ भुक्त्वाथपार्वतीसर्वगंधपुष्पसभूषणा ॥
सहानुचरकन्याभिःसहस्राभिर्हर्षयौ ॥ २४० ॥ अथाहशंकरोदेवींगच्छगौतममंदिरम् ॥ संध्योपास्तिमहंकृत्वाआगच्छामिपुनर्गृहम् ॥ ४१ ॥ इत्युक्ता
प्रययौदेवीगौतमस्यैवमंदिरम् ॥ संध्यावंदनकामाश्चसर्वएवविनिर्गताः ॥ ४२ ॥ कृतसंध्यास्तटाकेतुमहेशाद्यास्तुकृत्स्नशः ॥ अथोत्तरमुखःशंभुर्न्यासंकृ
त्वाजजापह ॥ ४३ ॥ अथविष्णुर्महातेजामहेशमिदमब्रवीत् ॥ सर्वैर्नमस्यतेयस्तुसर्वैरेवसमर्च्यते ॥ ४४ ॥हूयतेसर्वयज्ञेषुसभवान्किंजपिष्यति ॥ रचितां
जलयःसर्वेत्वामेवैकमुपासते॥४५॥सभवान्देवदेवेशकस्मैवारचितांजलिः॥नमस्कारादिपुण्यानांफलदस्त्वंमहेश्वर॥४६॥ तवकःफलदोवंद्यःकोवात्वत्तोधि
कोवद ॥ ॥ शंकरउवाच ॥ ॥ ध्यायेनकिंचिद्विप्रोविंदननमस्येहकिंचन ॥ ४७ ॥ नोपास्येकंचनहरेनजपिष्येहकिंचन ॥ किंतुनास्ति
कजंतूनांप्रवृत्त्यर्थमिदंमया ॥ ४८ ॥ दर्शनीयंहरेतेस्युरन्यथापापकारिणः ॥ तस्माल्लोकोपकारार्थमिदंसर्वंकृतंमया ॥ ४९ ॥ ओमित्युक्त्वाहरिरथतंन
त्वासमतिष्ठत ॥ अथतेगौतमगृहंप्राप्तादेवगणर्षयः ॥ २५० ॥ सर्वेपूजामथोचक्रुर्देवदेवेपिनाकिने ॥ देवोहनूमतासार्द्धंगायन्नास्तेरघूत्तम ॥ ५१ ॥ पश्चाक्ष
रींमहाविद्यांसर्वएवतदाजपन् ॥ हनूमत्करमालंब्यदेव्यभ्याशंगतोहरः ॥ ५२ ॥ एकशय्यासमासीनौतावुभौदेवदंपती ॥ गायन्नास्तेसहहनूमांस्तुंबुरुर्नारद ॥१६०॥

१ विनम्रमदना—इ०पा० । २ देवी—इ०पा० । ३ देवाग्रमिलितसदा—इ०पा० ।

स्तथा ॥ ५३ ॥ नानाविधिविलासांश्चचकारपरमेश्वरः ॥ आहूयपार्वतीमीशइदंवाक्यमुवाचह ॥ ५४ ॥ ॥ श्रीसदाशिवउवाच ॥ ॥ रचयिष्या
मिधम्मिल्लमेहिमत्पुरतःशुभे ॥ देव्याहनचयुक्तंतद्भर्त्राशुश्रूषणंस्त्रियः ॥ ५५ ॥ केशप्रसाधनकृतावनर्थांतरमापतेत् ॥ केशप्रसाधनेदेवतत्त्वंसर्वैनचेप्सि
तम् ॥ ५६ ॥ अथबंधेकृतेपश्चादंसप्रांतप्रमार्जनम् ॥ तनोश्चरमसंलग्नकेशपुष्पादिमार्जनम् ॥ ५७ ॥ एतस्मिन्वर्तमानेतुमहात्मानोयदागमन् ॥ त
दाकिमुत्तरंवाच्यंतवदेवादिवंदिनः ॥ ५८ ॥ नायांतिचेदथविभोभीतिर्नाशमुपेष्यति ॥ एवंहिभाषमाणांतांकरेणाकृष्यशंकरः ॥ ५९ ॥ स्वोर्वोस्तांस्थाप
यित्वैवविस्रस्यकचबंधनम् ॥ विभज्यचकराभ्यांसप्रससारनखैरपि ॥ २६० ॥ विष्णुदत्तांपारिजातस्रजंकचगतामपि ॥ कृत्वाधम्मिल्लमकरोदथमालांक
रागताम् ॥ ६१ ॥ मल्लिकास्रजमादायनवबंधकचबंधने ॥ कल्पप्रसूनमालांचब्रह्मदत्तांमहेश्वरः ॥ ६२ ॥ पार्वतीवसनेगूढगंधाढ्येचसमादधात् ॥ अथां
सपृष्ठसंलग्नमार्जनंकृतवान्विभुः ॥ ६३ ॥ श्लथनीवेरधोदेव्यावस्त्रवेष्टेरधोगतः ॥ देवःकिमिदमित्युक्त्वानीवींबंधंचकारह ॥ ६४ ॥ नासाभूषणमेतत्तेपश्या
मिसमदात्ततः ॥ इत्युक्त्वास्वयमादायविच्छायंमौक्तिकंसती ॥ ६५ ॥ हरिद्रायाःसमायोगेमुक्ताफलमदीप्तिमत् ॥ इदंहिध्रियतांमुक्ताफलंममतव
प्रियम् ॥ ६६ ॥ ॥ पार्वत्युवाच ॥ ॥ अहोत्वन्मंदिरंशंभोसर्ववस्तुसमृद्धिमत् ॥ पूर्वमेवमयासर्ववस्तुज्ञातंविभूषणैः ॥ ६७ ॥ अहोद्रविणसंपत्तिर्भूषणै
रवगम्यते ॥ शिरोविभूषितंदेवब्रह्मशीर्षस्यमालया ॥ ६८ ॥ नरकस्यतथामालावक्षःस्थलविभूषणम् ॥ शेषश्चवासुकिश्चैवसविषौतवकंकणे ॥ ६९ ॥
दिशोंऽबरेजटाकेशाभसितंचांगरागकम् ॥ महोक्षोवाहनंगोत्रंकुलंचाज्ञातमेवच ॥ २७० ॥ ज्ञायेतेपितरौनैवविरूपाक्षंतथावपुः ॥ एवंवदंतींगिरिजांविष्णुः
प्राहातिकोपनः ॥७१॥ किमर्थंनिंदसेदेविदेवदेवंजगत्पतिम् ॥ त्यक्ष्येप्राणान्प्रियान्भद्रेतवनूनमसंयमम् ॥७२॥ यत्रेशनिंदनंभद्रेतत्रनोमरणंव्रतम् ॥ इत्यु
क्त्वाथनखाभ्यांहिहरिश्छेत्तुंशिरोगतः ॥७३॥ महेशस्तुकरंगृह्यप्राहमासाहसंकृथाः ॥ पार्वतीवचनंसर्वंप्रियंममतवाप्रियम् ॥७४॥ ममाप्रियंहृपीकेशकर्तुंय
त्किंचिदिष्यते ॥ ओमित्युक्त्वाथभगवांस्तूष्णींभूतोऽभवद्धरिः॥७५॥हनुमानथदेवायव्यज्ञापयदिदंवचः ॥ अर्थयामिविनिष्कामंममपूजाव्रतंतथा॥७६॥
पूजार्थमप्यहंगच्छेममानुज्ञातुमर्हसि ॥ ॥ शंकरउवाच ॥ ॥ कस्यपूजाक्कवापूजाकिंपुष्पंकिंदलंवद ॥ ७७ ॥ कोगुरुःकश्चमंत्रस्तेकीदृशंपूजनंतथा ॥
एवंवदतिदेवेशेहनूमानतिकंपितः ॥ ७८ ॥ वेपमानसमस्तांगःस्तोतुमेवप्रचक्रमे ॥ ॥ हनूमानुवाच ॥ ॥ नमोदेवायमहतेशंकरायामितात्मने ॥ ७९ ॥
योगिनेयोगधात्रेचयोगिनांगुरवेनमः ॥ योगिगम्यायदेवायज्ञानिनांपतयेनमः ॥ २८० ॥ वेदानांपतयेतुभ्यंदेवानांपतयेनमः ॥ ध्यानायध्यानगम्यायधातॄणां



१ ब्रह्मदत्तांमहेश्वर-इ०पा० । २ दुष्प्राणा न प्रिया भद्रे तव नूनमसंयमम्-इ०पा० । ३ नरव्याघ्र-इ० पा० ।

गुरवेनमः ॥ २८१ ॥ शिष्टायशिष्टगम्यायभूम्यादिपतयेनमः ॥ अमस्तेत्यादिनावेदवाक्यानांनिधयेनमः ॥ ८२ ॥ आतनुष्वेतिवाक्यैश्चप्रतिपाद्यायते नमः ॥ अष्टमूर्तेनमस्तुभ्यंपशूनांपतयेनमः ॥ ८३ ॥ त्र्यंवकायत्रिनेत्रायसोमसूर्याग्निलोचन ॥ सुभृंगराजधत्तूरद्रोणपुष्पप्रियायते ॥ ८४ ॥ बृहतीपूगपुं नागचंपकादिप्रियायच ॥ नमस्तेस्तुनमस्तेस्तुभूयएवनमोममः ॥ ८५ ॥ शिवोहरिमथप्राहमाभैपीर्वेदमेखिलम् ॥ ॥ हनुमानुवाच ॥ ॥ शिवलिंगार्चनंकार्यंभस्मोद्धूलितदेहिना ॥ ८६ ॥ दिवासंपादितैस्तोयैःपुष्पाद्यैरपिताहशैः ॥ देवविज्ञापयिष्यामिशिवपूजाविधिंशुभम् ॥ ८७ ॥ सायंकालेतुसंप्राप्तेअशिरस्नानमाचरेत् ॥ क्षालितंवसनंशुष्कंधृत्वाचम्यद्विरग्रधीः ॥ ८८ ॥ अथभस्मसमादायआग्नेयंस्नानमाचरेत् ॥ प्रणवेनसमामं न्याप्यष्टवारमथापिवा ॥ ८९ ॥ पंचाक्षरेणमंत्रेणनाम्नावायेनकेनचित् ॥ सप्ताभिमंत्रितंभस्मदर्भपाणिःसमाहरेत् ॥ २९० ॥ ईशानःसर्वविद्यानामुक्त्वाशिर सिपातयेत् ॥ तत्पुरुषायविद्महेमुखेभस्मप्रसेचयेत् ॥९१॥ अघोरेभ्योऽथघोरेभ्योभस्मवक्षसिनिक्षिपेत्॥वामदेवायनमइतिगुह्यस्थानेविनिक्षिपेत्॥९२॥ सद्योजातंप्रपद्यामिनिक्षिपेदथपादयोः ॥ उद्धूलयेत्समस्तांगेप्रणवेनविचक्षणः ॥ ९३ ॥ त्रैवर्णिकानामुदितःस्नानादिविधिरुत्तमः ॥ शूद्रादीनांप्रवक्ष्या मियदुक्तंगुरुणातथा ॥ ९४ ॥ शिवेतिपदमुच्चार्यभस्मसंमंत्रयेत्सुधीः ॥ सप्तवारमथादायशिवायेतिशिरःक्षिपेत् ॥ ९५ ॥ शंकरायमुखेप्रोक्तंसर्वज्ञायहृ दिक्षिपेत् ॥ स्थाणवेनमइत्युक्त्वागुह्येचापिस्वयंभुवे ॥९६॥ उच्चार्यपादयोःक्षिप्त्वाभस्मशुद्धमतःपरम् ॥ नमःशिवायेत्युच्चार्यसर्वांगोद्धूलनंस्मृतम् ॥९७॥ प्रक्षाल्यहस्तावाचम्यदर्भपाणिःसमाहितः ॥ दर्भाभावेसुवर्णंस्यात्तदभावेगवालकः ॥ ९८ ॥ तदभावेतुदूर्वाःस्युस्तदभावेतुराजतम् ॥ संध्योपा स्तिजपंदेव्याःकृत्वादेवगृहंव्रजेत् ॥ ९९ ॥ देववेदिमथोवापिकल्पितंस्थंडिलंतुवा ॥ मृण्मयंकल्पितंशुद्धंपद्मादिरचनायुतम् ॥ ३०० ॥ चातुर्वर्णकरंगैश्चश्वे तेनैकेनवापुनः ॥ विचित्राणिचपद्मानिस्वस्तिकादितथैवच ॥ १ ॥ उत्पलादिगदाशंखत्रिशूलंडमरुंतथा ॥ सरोक्तपंचप्रासादंशिवलिंगमथैवच ॥ २ ॥ सर्वकामफलंवृक्षंकुलकंकोलकंतथा ॥ षट्कोणंचत्रिकोणंचनवकोणमथापिवा ॥ ३ ॥ कोणद्वादशकांदोलांपादुकाव्यजनानिच ॥ चामरच्छत्रयुगलं विष्णुब्रह्मादिकंतथा ॥ ४ ॥ चूर्णैर्विरचयेद्देव्यांधीमान्देवालयेऽपिवा ॥ यत्रापिदेवपूजास्यात्तत्रैवंकल्पयेद्बुधः ॥ ५ ॥ स्वहस्तरचितंमुख्यंक्रीतंचैवतुमध्य मम् ॥ याचितंतुकनिष्ठंस्याद्बलात्कारमथाधमम् ॥ ६ ॥ अहैतुयत्त्वनहैतुबलात्कारात्तुनिष्फलम् ॥ रक्तशालिजपास्थाणकलमासितरक्तकैः ॥ ७ ॥ तंदुलैर्व्रीहिमात्रोत्थैःकर्णैश्चैवयथाक्रमम् ॥ उत्तमैर्मध्यमैश्चैवकथितैरधमैस्तथा ॥ ८ ॥ पद्मादिस्थापनैरेवतत्सम्यग्यागमाचरेत् ॥ प्रागुत्तरमुखो

१ शिवोक्तपंचप्रासादम्–इ०पा० ।

वापियादिवाप्राङ्मुखोभवेत् ॥ २०९ ॥ आसनंचप्रवक्ष्यामियथादृष्टंयथाश्रुतम् ॥ कौशंचाम्मचैलतुल्यंदारवंताडपत्रकम् ॥ २१० ॥ कांबलंकांचनं
चैवराजतंताम्रमेवच ॥ गोकरीषार्कजैर्वापिआसनंपरिकल्पयेत् ॥ ११ ॥ वैयाघ्रंरौरवंचैवहारिणंमार्गमेवच ॥ चार्मंचतुर्विधंज्ञेयमथवंधुकमेवच ॥ १२ ॥
यथासंभवमेतेषुह्यासनंपरिकल्पयेत् ॥ कृतपद्मासनोवापिस्वस्तिकासनएवच ॥१३॥ दर्भभस्मसमासीनःप्राणानायम्यवाग्यतः ॥ तावत्संदेवतारूपोध्या
नंचान्तःसमाचरेत् ॥१४॥ शिखांतेद्वादशांगुल्येस्थितंसूक्ष्मतनुंशिवम् ॥ अंतश्चरंतंभूतेषुगुहायांविश्वमूर्तिषु ॥१५॥ सर्वाभरणसंयुक्तमणिमादिगुणान्वित
म् ॥ ध्यात्वातंधारयेच्चित्तेतद्वचाप्त्यापूरयेत्तनूम् ॥१६॥ तयादीप्त्याशरीरस्थंपापंनाशमुपागतम् ॥ स्वर्णंपारदसंपर्काद्रक्तंश्वेतंयथाभवेत् ॥ १७ ॥ तद्वादश
दलावृत्तमष्टपंचत्रिरेखवा ॥ परिकल्प्यासनंशुद्धंतत्रलिंगंनिधायच ॥२१८॥ गुहास्थितंमहेशानंलिंगेसंचिंतयेत्तथा ॥ शोधितेकलशेतोयंशोधितंगंधवासित
म् ॥१९॥ सुगंधपुष्पंनिक्षिप्यप्रणवेनाभिमंत्रितम् ॥ प्राणायामश्चप्रणवःशूद्रेषुनविधीयते॥२०॥ प्राणायामपदेध्यानंशिवेत्योङ्कारमंत्रणम् ॥ गंधपुष्पाक्षतादी
निपूजाद्रव्याणियानिच ॥२१॥ तानिस्थाप्यसमोपेतुततःसंकल्पयिष्यते ॥ शिवपूजांकरिष्यामिशिवतुष्टचर्थमेवच ॥२२॥ इतिसंकल्पयित्वातुततआवाह
नादिकम् ॥ कृत्वातुस्नानपर्यंतंततःस्नानंप्रकल्पयेत् ॥ २३ ॥ नमस्तेत्यादिमंत्रेणशतरुद्रियविधानतः ॥ अविच्छिन्नातुयाधारामुक्तिधारेतिकीर्ति
ता ॥ २४ ॥ तयायःस्नापयेन्मासंजपन्रुद्रमुपांशुवा ॥ एकवारंत्रिवारंचपंचसप्तनवापिवा ॥ २५ ॥ एकादशमथोवारमथैकादशचान्वितम् ॥
मुक्तिस्नानमिदंज्ञेयंमासंमोक्षप्रदायकम् ॥ २६ ॥ शैवयाविद्ययास्नानंकेवलप्रणवेनच ॥ मृण्मयैर्नालिकेरस्यशकलैश्चोर्मिभिस्तथा ॥ २७ ॥
कांस्येनमुक्ताशुक्त्याचपुष्पादिकसरेणवा ॥ स्नापयेद्देवदेवेशंयथासंभवमीरितैः ॥ २८ ॥ शृंगस्यचविधिंवक्ष्येस्नानयोग्यंयथाभवेत् ॥ पूर्वमंतस्तुसंशो
ध्यवहिरंतस्तुशोधयेत् ॥ २९ ॥ सुस्निग्धंलघुकृत्वाथनाग्रंछिद्यात्कथंचन ॥ नीचैकदेशविन्यस्तद्वारद्रोण्यासुवृत्तयोः ॥२३०॥ कुशानुयुतयास्नानंदेवायप
रिकल्पयेत् ॥ एवंगवयशृंगस्यजलमूर्तिरथोच्यते ॥ ३१ ॥ द्वारेनिपिद्धलोहार्द्धसंधिद्वारासमन्विते ॥ योगवक्रंनागदंडंनागाकारंप्रकल्पयेत् ॥ ३२ ॥ फल
स्थानेतुचपकंदंडेनसमरंध्रकम् ॥ तत्रैवपातयेत्तोयमूर्द्धयंत्रघटेस्थितम् ॥ ३३ ॥ पातयेदथचान्येनवामेनैवकरेणवा ॥ मुक्तिधाराकृतातेनपवित्रंपापनाश
नम् ॥ ३४ ॥ एवंसंस्थाप्यदेवेशंपंचगव्यैस्तथैवच ॥ पंचामृतैरथस्नाप्यमधुरत्रितयेनच ॥ ३५ ॥ विभूष्यभूपकैर्देवंपुनःस्नाप्यमहेश्वरम् ॥ शीतोपचारंकृ
त्वाथततआचमनादिकम् ॥ ३६ ॥ वस्त्रंतथोपवीतंचपंचगंधकमेवच ॥ कर्पूरमरुवंचापिपाटीरमथवाभवेत् ॥ २३७ ॥ उभयंमिश्रितंवापिशिवलिंगंप्रपूज



१ अगरुंचापि-इ०पा० ।

येत् ॥ कृत्स्नपीठंगंधपूर्णंयद्वाविभवसारतः ॥ ३३८ ॥ तूष्णीमथोपचारंवाकालियंपुष्पमर्पयेत् ॥ श्रीपत्रमरुचित्याजंयथाशक्त्याखिलंयथा ॥ ३९ ॥
अनेकद्रव्यधूपंचगुग्गुलंकेवलंतथा ॥ कपिलाघृतसंयुक्तंसर्वधूपायशस्यते ॥३४०॥ धूपंदत्वायथाशक्तिकपिलाघृतदीपकान् ॥ अथवाप्याज्यमात्रेणदी
पान्दत्वोपहारकम् ॥ ४१ ॥ यथाशक्त्युपपन्नंचदत्वापुष्पसमन्वितम् ॥ मुखशुद्धिंततोदत्वादत्वातांबूलमादरात् ॥ ४२ ॥ प्रदक्षिणनमस्कारौपूजैवंहि
समाप्यते ॥ गीतांगपंचकंपश्चात्तानिविज्ञापयामिते॥४३॥गीतंवाद्यंपुराणंचनृत्यंहासोक्तिरेवच ॥ नीराजनंचपुष्पाणामंजलिश्चाखिलार्पणम्॥४४॥क्षमाचो
द्वासनंचैवकीर्तितंचोपचारकम् ॥ भूषणंचतथाछत्रंचामरंव्यजनंतथा ॥४५॥ शिवोपवीतंकैङ्कर्यंपडीशानोपचारकम् ॥ द्वात्रिंशदुपचारैस्तुयःसमाराधये
च्छिवम् ॥४६॥ एकेनाह्नासमस्तानांपापानांनाशनंध्रुवम् ॥ द्वात्रिंशदुपचारंस्यात्पूजनंतूत्तमोत्तमम् ॥४७॥ ॥ सदाशिवउवाच ॥ ॥ एवमेतत्कपि
श्रेष्ठतवपूजांवदाम्यहम् ॥ मत्पादयुगलंपूज्यसर्वपूजाकरोभव ॥ ४८ ॥ आराध्येत्थंयथालिंगेतन्ममाराधनंकुरु ॥ ॥ हनूमानुवाच ॥ ॥ गुरु
णालिंगपूजैवनियताकल्पितामम ॥ ४९ ॥ तांकरोमिपुरादेवपश्चात्त्वत्पादपूजनम् ॥ इत्युक्त्वैवनमस्येशंशिवलिंगार्चनेभवत् ॥ ५० ॥ सरस्वतीरमथो
गत्वाकृत्वासैकतवेदिकाम् ॥ तालपत्रैर्विरचितमासनंपरिकल्पयेत् ॥ ५१ ॥ प्रक्षाल्यपादहस्तौतुसमाचम्यसमाहितः ॥ भस्मस्नानमथोचक्रेपुनराचम्य
वाग्यतः ॥ ५२ ॥ देववेद्यामथोचक्रेपद्मानिसुमनोहरम् ॥ अनंतरंतालपत्रंपद्मासनगतःकपिः ॥ ५३ ॥ प्राणानायम्यसंन्यासंशुक्लध्यानसमन्वितः ॥ प्रण
म्यगुरुमीशानंजपन्नासीदतःपरम् ॥ ५४ ॥ अथदेवार्चनंकर्तुंयत्नमास्थितवानपि ॥ पलाशपत्रपुटकद्वयानीतजलंशुचि ॥ ५५ ॥ शिरःकमंडलुगतंनिधा
याग्नित्रिमंत्रितम् ॥ आवाहनादिकृत्वाथस्नानपर्यन्तमेवच ॥ ५६ ॥ अथस्नापयितुंदेवमादायकरसंपुटे ॥ कृत्वानिरीक्षणंदेवंपीठंनोदृष्टवान्कपिः ॥ ५७ ॥
लिंगमात्रंकरगतंदृष्ट्वाभीतिसमन्वितः ॥ इदमाहमहायोगीकिंवापापंमयाकृतम् ॥ ५८ ॥ यदेतत्पीठरहितंशिवलिंगंकरस्थितम् ॥ ममाद्यमरणंसिद्धंपीठं
चेन्नागमिष्यति॥५९॥अथरुद्रंजपिष्यामितदायातिमहेश्वरः॥इतिनिश्चित्यमनसाजजापशतरुद्रियम्॥३६०॥अथापिनसमायातोमहेशोऽथकपीश्वरः ॥ रुद्रं
न्यपातयद्भूम्यांवीरभद्रःसमागतः॥६१॥किमर्थंरुद्यतेभक्तरुदिहेतुंवदस्वमे ॥ ॥ हनूमानुवाच ॥ ॥ पीठहीनमिदंलिंगंपश्यमेपापसंचयम् ॥६२॥ ॥ वीरभ
द्रउवाच ॥ ॥ यदिनायातिपीठंतेलिंगेमासाहसंकृथाः ॥ दाहयिष्याम्यहंलोकंयदिनायातिपीठकम् ॥ ६३ ॥ पश्यदर्शयमेलिंगंपीठंयद्यागतं
नवा ॥ अथदृष्ट्वावीरभद्रोलिंगंपीठमनागतम् ॥ ६४ ॥ दग्धुकामोखिलाँल्लोकान्वीरभद्रःप्रतापवान् ॥ अनलंभुविविक्षेपक्षणाद्दग्धामहीतदा ॥ ३६५ ॥

१ सन्यासं—न्यासयुक्तंयथास्यात्तथेत्यर्थः ।

अथसप्ततलान्दग्ध्वापुनरूर्द्ध्वमवर्तत ॥ पंचोर्द्ध्वलोकानदहज्जनलोकनिवासिनः ॥ ३६६ ॥ ललाटनेत्रसंभूतंनखेनादायचानलम् ॥ जंबीरफलसंकाशंकृत्वा
करतलेविभुः ॥ ६७ ॥ यदिनायातिपीठंतेदग्धालोकानसंशयः ॥ अनायातमथोदृष्ट्वावीरभद्रःप्रतापवान् ॥ ६८ ॥ सनकादयोमहात्मानोज्ञात्वा
योगेनचागमन् ॥ गौतमस्याश्रमवरंसमागम्यमहेश्वरम् ॥ ६९ ॥ नदृष्ट्वंतोदेवादिंविद्यमानमपिद्विजाः ॥ अस्तुवन्नथचस्तोत्रैःसर्ववेदसमुद्भवैः ॥ ३७० ॥
ॐनमोदेवदेवायतस्मैशुद्धप्रभाचिंत्यरूपायतस्मै ॥ नमःसुराणामधीशायतस्मैनमोवेदगुह्यायशुद्धायतस्मै ॥ ७१ ॥ नमःशिवायादिदेवायतस्मैनमो
व्यालयज्ञोपवीतायतस्मै ॥ नमःसुरानंदसंदोहवर्पत्रयीविंदुविश्वंभरायतस्मै ॥ ७२ ॥ पृथिव्यथोवायुराकाशमापःपुनःशशीवह्निसूर्य्यौतथात्मा ॥ य
स्याष्टैतामूर्तयःशंकरस्यतस्मैनमोज्ञानगम्यायशश्वत् ॥ ७३ ॥ एतांस्तुतिमथाकर्ण्यभगनेत्रप्रदःशिवः ॥ विष्णुमाहचगच्छत्वंसमानयचतान्द्वि
जान् ॥ ७४ ॥ आनीतास्तेनहरिणादेवायप्रणतास्तुते ॥ तानाहशंकरोवाक्यंकिमर्थंयूयमागताः ॥ ७५ ॥ ॥ मुनयऊचुः ॥ ॥ देवद्वादशलोका
नांदृश्यंतेभस्मराशयः॥ स्थितमेकंवनमिदंपश्यत्वंलोकसंक्षयम् ॥ ७६ ॥ ॥ सदाशिवउवाच ॥ ॥ ऊर्द्ध्वस्थपंचलोकानांदाहेसंदेहएवनः ॥ कथमंगा
रवृष्टिश्चकथंनोवामहाध्वनिः ॥ ७७ ॥ ॥ मुनयऊचुः ॥ ॥ भीतिरस्माकमधुनावर्ततेवीरभद्रतः ॥ सएवांगारवृष्टिंचपिपासुरिवतामपात् ॥ ७८ ॥ देवोथ
वीरमाहूयकिंवीरेत्यब्रवीद्भवः ॥ वीरोहनूमतोलिंगपीठाभावादिदंकृतम् ॥ ७९ ॥ कपेश्चित्तंपरिज्ञातुंमयाकृतमिदंबृहत् ॥ कृपानिधिरथोदेवोयथापूर्व
मकल्पयत् ॥ ३८० ॥ दग्धानप्यखिलाँल्लोकान्पूर्वतःशोभनान्विभुः ॥ कल्पयामासविश्वात्मावीरभद्रमथाब्रवीत् ॥ ८१ ॥ आलिंग्याघ्रायशिरसितांबूलं
दत्तवान्हरः ॥ अथासौहनुमानीशपूजनंकृतवानथ ॥ ८२ ॥ एकंवनचरंतत्रगंधर्वंसविपंचिकम् ॥ इदमाहमहावीणाममवैदीयतामिति ॥ ८३ ॥ गं
धर्वोनमयात्याज्यावीणाप्राणसमामम ॥ ममापिप्राणसदृशीवीणेत्याहकपीश्वरः ॥ ८४ ॥ अथमुष्टिनिपातेनगंधर्वेपतितेकपिः ॥ आदायवीणांमहतींस्व
रतंतुसमन्विताम् ॥ ८५ ॥ अलाबुसंयुतांकृत्वाराजवृक्षफलाकृतिम् ॥ तस्योरसिविनिक्षिप्यगायन्नागाच्छिवांतिकम् ॥ ८६ ॥ बृहतीकुसुमैःशुद्धैर्देवपा
दावपूजयत् ॥ तस्मैवरमथप्रादादाकल्पंजीवितंपुनः ॥ ८७ ॥ समुद्रलंघनेशक्तिंवरंप्रादादथापरम् ॥ ८८ ॥ समस्तभूषासुविभूषितांगःस्वदीप्तिमंदीकृत
देवदीप्तिः ॥ प्रसन्नमूर्तिस्तरुणःशिवाङ्कःसंभावयामाससमस्तदेवान् ॥ ८९ ॥ पीतमुद्रमनीयंचसमादायमहेश्वरः ॥ पीतवस्त्रमिदंदेवत्वंगृहाण
हरेशुभम् ॥ ३९० ॥ ब्रह्मणेरक्तवसनंसर्वेषांवसुदस्तथा ॥ देवर्षिदानवादीनांदत्तवान्वसुयुग्मकम् ॥ ३९१ ॥ रामोपिचैतदाकर्ण्यशंभवेयुग्ममर्पयत् ॥



१ देवादिसेव्यमानमपिद्विजाः—इ० ० पा० ।

सुसूक्ष्मंबहुमूल्यंचस्वर्णभूषणमेवच॥३९२॥अथभुक्त्वासुखासीनःसामात्यःसपुरोहितः॥नानामुनिगणैर्भूपैर्वानरैर्गौतमीतटे॥९३॥शंभुंपुराणतत्त्वज्ञंराघवो
वाक्यमब्रवीत्॥त्वमेवसर्वंजानीषेसर्वंधर्मगुहाशतम् ॥९४॥ कस्मिन्कस्मिन्युगेब्रह्मन्किंविशिष्टंवदस्वमे ॥ ॥ शंभुरुवाच ॥ ॥ ध्यानमेवकृतेश्रेष्ठंत्रेतायां
यज्ञएवच ॥ ९५ ॥ द्वापरेचार्चनंतिष्येदानंचहरिकीर्तनम् ॥ सर्वंचशस्तंसर्वत्रध्यानंनचकलौयुगे ॥ ९६ ॥ नराणांमुग्धचित्तत्वात्क्लेच्छस्थानांविशांप
ते ॥ नधर्मेनियताबुद्धिर्नवेदेनैवचस्मृतौ ॥ ९७ ॥ नक्रतौनस्वधाकारेपुराणानांचनश्रुतौ ॥ नैयज्ञेनचतीर्थेषुनचशुश्रूषणेसताम् ॥ ९८ ॥ नेज्यायां
देवतानांचनस्वजातीयकर्म्मणि ॥ नदेवस्मरणेनापिनचक्वापिवृषेनृप ॥ ९९ ॥ अतश्चदीर्घकालानांपुण्यानामक्षमानराः ॥ दानंतुस्वल्पकालत्वात्कर्तुं
शक्नोतिमानवः ॥ ४०० ॥ अंतश्चकलिदुष्टानांप्रायश्चित्तंनविद्यते ॥ केषांचित्पापनाशःस्यात्प्रायश्चित्तैस्तुनान्यथा ॥ १ ॥ ब्रह्मज्ञानीगयाश्राद्धीकाशी
गंताश्रुतौरतः ॥ पुराणज्ञावमाश्चैतेश्रोतातस्यचराघव ॥ २ ॥ युगानामनुसारेणतथार्थस्यविवेचनात् ॥ स्वपरप्रत्ययोत्पादात्परब्रह्मप्रकाशनात् ॥ ३ ॥
पुराणवक्तासर्वस्माद्ब्राह्मणस्तुविशिष्यते ॥ तेनापिचकृतंपापंनसज्येत्किमुतान्यतः ॥ ४ ॥ अन्येषामपिकेषांचित्पुराणंपापनाशनम् ॥ यःपुराणेषुविश्वा
सीवक्तारंमन्यतेगुरुम् ॥ ५ ॥ ब्रह्मविद्याप्रदातारंविशेषंज्ञातिबंधुतः ॥ तस्यपापानिसर्वाणिविलयंयान्त्यसंशयम् ॥ ६ ॥ अथश्रीशैलगमनंपूजकस्यम
हेशितुः ॥ अतःकलौमनुष्याणांपुराणंपापनाशनम् ॥ ७ ॥ पुराकलियुगेरामवृत्तंसंकीर्तयेशृणु ॥ आसीत्तुगौतमोनामब्राह्मणोवेदवर्जितः ॥ ८ ॥
तस्यपुष्टिःपशुश्वास्तांभ्रातरौवेदवर्जितौ ॥ ताभ्यांसहकृषिंचक्रेतत्रवृद्धिमवापच ॥ ९ ॥ धनधान्यादिकंकिंचिद्राजानंदत्तवानथ ॥ उवाचवचनंकिंचिद
धिकारंनिरूपय ॥ १० ॥ अथैनगमयिष्यामितौशक्तौभ्रातरौमम ॥ ॥ राजोवाच ॥ ब्राह्मणस्याधिकारोहिवैदिकेधर्मकर्मणि ॥ ११ ॥ तदन्यत्रनि
युक्तस्यब्राह्मण्यंविप्रणश्यति ॥ ॥ गौतमउवाच ॥ युगेष्वन्येषुधर्मोयंकलिधर्मोनताहशः॥१२॥भूपतित्वंहिभूपालनृपाणांधर्मउच्यते ॥ ब्राह्मणश्चपरिक्षीण
स्तंकुर्वन्नैवदुष्यति ॥ १३ ॥ शूद्राणांतुकृषिर्द्धर्मोनापद्यप्यग्रजन्मनः ॥ तस्मात्क्षत्रेणवर्तिष्येग्रामान्ममसमादिश ॥१४॥ अन्यत्रचात्रक्षत्रेणवर्तनंममरोच
ते ॥ अन्यन्नतुतथेत्युक्तोददौग्रामान्द्विजन्मनः ॥ १५ ॥ ग्रामाधिकारदुष्टस्यवर्तनंत्वन्यथाभवत् ॥ अभक्षिमांसंचापायिसुराचाभाषिदुर्वचः
॥ १६ ॥ परयोपातथागामिपरस्वंप्रत्यहारिच ॥ अक्रीडिद्यूतमसकृत्कलंजंचादिदुर्भुजा ॥ १७ ॥ नापूजिजगतामीशःशिवोवाविष्णुरेववा ॥ ॥१६३॥
एवंकालेनदुर्वृत्तंराजावाक्यमभाषत ॥ १८ ॥ विप्रविप्रत्वमुत्सृज्यशूद्रत्वंप्राप्तवानसि ॥ तस्मान्नियोगधर्मेणभवंतंभ्रंशयामिच ॥ १९ ॥ मास्तु

१ तिष्यनक्षत्रोपलक्षिते कलावित्यर्थः। २ कलिस्थानाम्–इ० पा०। ३ नजपे–इ०पा०। ४ अतःदानादित्यादिन्यर्थः। ५ वाचकः–इ० तस्यानुवाचकः–इ०च पा०।

विप्रत्वमथवैवशूद्रत्वेववरंमम ॥ तद्दतेयदिविप्रास्तेनभोक्ष्यंतिवरंमम ॥ ४२० ॥ नहिसर्वमिदंत्यक्तुंशक्तोहंपृथिवीपते ॥ ॥ शंभुरुवाच ॥ ॥ एवं
वदतिदुर्विप्रेराजातूष्णीमतिष्ठत ॥ २१ ॥ सतुवैशूद्रतुल्यश्चबुभुजेन्नंसहामिपम् ॥ कदाचिदथदुर्वृत्तःप्रतोलीमंडपस्थितः ॥ २२ ॥ द्विजे
नपठ्यमानंतुपद्यंतुश्रुतवानिदम् ॥ हृदयेपद्यमेतत्तुद्विजेरितमतिष्ठत ॥ २३ ॥ परात्परतरंयांतिनारायणपरायणाः ॥ नतेतत्रगमिष्यंतियेद्विषं
तिमहेश्वरम् ॥ २४ ॥ व्याख्यानमपिचश्रुत्वापौराणिकमभाषत ॥ कीदृङ्नारायणःप्रोक्तःकीदृशोपिमहेश्वरः ॥ २५ ॥ किंपरंत्वयनंप्रोक्तं
द्वेषःकीदृगुदाहृतः ॥ किंतत्परमितिख्यातंततःपरतरंचकिम् ॥ २६ ॥ ॥ पौराणिकउवाच ॥ ॥ परंतद्ब्रह्मणःस्थानंसुखव्यक्तैकलक्षणम् ॥
ततःपरतरंविष्णोर्द्धामतद्ब्रह्मणोधिकम् ॥ २७ ॥ अविनाशितयातत्तुकीर्तितंपरमंपदम् ॥ तन्मध्येपुरुषोविष्णुस्तदंगपरमंविभुः ॥ २८ ॥
आपोहिनरजन्मत्वान्नाराःप्रोक्तामनीषिभिः ॥ नाराश्चास्यायनंयस्मात्तेननारायणःस्मृतः ॥ २९ ॥ तत्परंवर्तनंयेषांतेप्रोक्तास्तत्परायणाः ॥
महदादीनितत्वानियानितेषांयईश्वरः ॥ ४३० ॥ सूर्याग्निशशिनेत्रोऽसौमहेशःस्यादुमापतिः ॥ द्वेषोहिवैरंविज्ञेयमीश्वरेपरमात्मनि ॥ ३१ ॥
॥ शंभुरुवाच ॥ ॥ एवंपुराणभट्टेनसमीरितमिदंवचः ॥ चिंतयन्पुनरप्याहमादृशस्यकथंगतिः ॥ ३२ ॥ पौराणिकोऽथतंप्राहशृणुवक्ष्यामितेगतिम् ॥
कुरुसर्वेणयत्नेनप्रायश्चित्तंयथाविधि ॥ ३३ ॥ धर्मंचरयथाशक्तियथाकालंयथाविधि ॥ विमुक्तपापःपश्चात्त्वमुत्तमांगतिमेष्यसि ॥ ३४ ॥ पुराणमथवानि
त्यंशृणुष्वावहितश्चसन् ॥ निराशोवामहेशानंपूजयस्वपिनाकिनम् ॥ ३५ ॥ देवंवापुंडरीकाक्षंकेशवंक्लेशनाशनम् ॥ संन्यासमथवानित्यंब्रह्मज्ञानपरो
भव ॥ ३६ ॥ अथवागच्छकाशींशंमुक्तोवामृतिमाप्नुहि ॥ गयांवागच्छतत्रत्वंश्राद्धंकर्तुंप्रयत्नतः ॥ ३७ ॥ अथवासर्ववेदानांसारंपातकनाशनम् ॥ रुद्रं
रुद्रप्रियकरंजपप्रत्यहमादरात् ॥ ३८ ॥ श्रीशैलमथवागच्छकेदारमथवेच्छया ॥ अथवाप्रतिवर्षेतुमाघस्नानंप्रवर्तय ॥ ३९ ॥ किमत्रबहुनोक्तेनधर्मभक्तः
सदाभव ॥ नैवंनरकवासस्तेभवितातुद्विजाधम ॥ ४४० ॥ ॥ गौतमउवाच ॥ ॥ श्रुत्वासर्वंकरिष्यामिपुराणंभवतोमुखात् ॥ शास्त्रंविश्वासहेतुंचव
र्ज्यंचापिवदस्वमे ॥४१॥ ॥ पौराणिकउवाच ॥ ॥ वर्ज्यमांसंसुरान्यस्त्रीभोगोद्यूतंविकत्थनम् ॥ पारुष्यमनृतंमायादेवदेवविनिंदनम् ॥४२॥ गुरूणांसुरवृ
द्धानांपुराणस्मृतिभाषिणाम् ॥ निंदनंश्वेतवृंताकंकृतकालाबुवर्तनम् ॥ ४३ ॥ बीजपूरंकुसुंभंचलोहितंशृंगमेवच ॥ [illegible]रुंनालिकेरंचकूष्मांडकंतथैव
च ॥ ४४ ॥ कोविदारफलंतैलपक्वंमानवजंपयः ॥ वार्ध्रीणसखरीदुग्धंसूतिकाक्षीरमाविकम् ॥ ४४५ ॥ औष्ट्रमेकशफक्षीरंमार्गंमाजंनृसंभवम् ॥ विवत्सा

१ पुराणभेदेन—इ०, पुराणभट्टेन—इ०चपा०

सांधिनीक्षीरंलवणंचैवयोगियत् ॥ ४४६ ॥ नालिकेररसंकांस्येताम्रेमधुचसीसके ॥ काचेतक्रंकरंभांश्चघृताक्तान्नैवकारयेत् ॥४७॥ होमंतुमृण्मयेपात्रेपुरो
डाशंतुराजते ॥ नसेवेतपरंलोकेशुभार्थीतुविचक्षणः ॥ ४८ ॥ पात्रांतश्चूर्णलेपोपितत्रभक्षणमेवच ॥ क्रमुकस्यतथाभक्षश्चूर्णपत्रस्यचैवहि ॥ ४९ ॥ क्रमु
कस्यापिपक्वस्यभक्षणंक्रमियोगिनः ॥ पायसेलवणंचैवकेवलंचकरार्पितम् ॥ ४५० ॥ सिंधुसौराष्ट्रकांबोजमागधेषुचसिंहले ॥ नदोषायभवेत्तत्रक्षीरंचल
वणान्वितम् ॥ ५१ ॥ क्षीराणिचसमस्तानिलवणानिचयोगतः ॥ देशेष्वन्येषुदोपायपानेचैवेहसंशयः ॥ ५२ ॥ किमत्रबहुनोक्तेनसद्भिर्निंद्यंविवर्जयेत् ॥
॥ शंभुरुवाच ॥ ॥ एवंतस्यवचःश्रुत्वाब्राह्मणस्यमहात्मनः ॥ ५३ ॥ स्वमेवभवनंगत्वाचिंतयामासदुःखितः ॥ रात्रौमृत्युर्दिवाचेतिनजानातिमहान
पि ॥ ५४ ॥ परलोकेसुखंदुःखमिहभोगविनोदनम् ॥ क्रिमिकीटमनुष्याद्यैःसुखदुःखैःपृथक्पृथक् ॥ ५५ ॥ प्रतिजीवंतुहेतूनांभेदोऽपिसुविनिश्चयः ॥
एकस्यापिहिजीवस्यनास्तिचैकविधास्थितिः ॥ ५६ ॥ जन्मकालेमहाज्ञानंशैशवेत्यल्पबोधनम् ॥ स्खलत्पदेल्पविज्ञानंबाल्येचाल्पंतथैवच ॥५७॥
कौमारेक्रीडनरतिर्यौवनेविषयोषितम्[1] ॥ यौवनेविनिवृत्तेतुद्रव्यसंपादनेपणा ॥ ५८ ॥ वार्द्धकेभोगलिप्साचनभोक्तुंक्षमतेपिच ॥ दूषिकाश्लेष्मलालाभि
र्वलीपलितकंपनैः॥५९॥ श्वासकासानिलाक्षिप्तैर्दृष्टपाकैर्विकलैर्युतः[2]॥किंचिद्वक्तुंनशक्नोतिनचजानातिकिंचन॥६०॥ तिष्ठंतीषुपरस्त्रीषुगुह्यस्थानंप्रदर्शयेत् ॥
कोशकंडूयनपरःक्रूरोजीवितलक्षणैः ॥६१॥ कंडूयतेस्फिचौवस्त्रमुद्धृत्यचविचालयन् ॥ भुंजानःश्लेष्मणाग्रासंग्रसितुंनचशक्नुयात् ॥६२॥ यदाकासस्तदा
जज्ञेपायुवायुश्चशब्दवान् ॥ निःसृतिश्चमलस्यापिश्लेष्मनिर्गमएवच ॥ ६३ ॥ स्तुपादिभर्त्सनंबालतालहास्यनिदर्शनम् ॥ गुरुनिर्गमनादीनिसंचिंत्यचपु
नःपुनः ॥ ६४ ॥ आहूतोभोजनार्थंभोज्यान्नादिविनिंदयन् ॥ चिरमुष्णंचनिर्भर्त्स्यपुनर्श्चितामवापसः ॥ ६५ ॥ अतिदुष्कृतिकर्म्माहंकथंभोक्ष्येकथं
स्वपे ॥ कथंतिष्ठेकथंगच्छेपरलोकःकथंभवेत् ॥ ६६ ॥ इतिचिंताकुलोनित्यंननमत्यपरान्वितः ॥ द्विजस्यसदनंगत्वापुराणज्ञस्यराघव ॥ ६७ ॥ ल
ज्जावाक्कृतवक्रश्चकिंकरोमीत्यभाषत ॥ नकिंचिदप्युवाचासौद्विजःपौराणिकस्तदा ॥ ६८ ॥ पापोयमितिविज्ञायशिष्येणनिरगामयत् ॥ गौतमोपिवि
निर्गम्यद्वार्येवचबहिःस्थितः ॥६९॥ भुव्यासीनंतुविज्ञायपुराणार्थविचारकम् ॥ कथंकथमपिप्राप्यपीठंदत्तंचनाभजत् ॥४७०॥ निषण्णोभूतलेरामपुराण
ज्ञमभापत ॥ प्रायश्चित्तंकरिष्यामितदत्रैवविधीयताम् ॥ ७१ ॥ ॥ ब्राह्मणउवाच ॥ ॥ पापानिकीर्तयस्वत्वंसर्वथैवकृतानितु ॥ सचापिनाकृतंकिंचि
न्मयापापमितीरयन् ॥ ७२ ॥ रुदन्पपातभूम्यांचकथंताततेतिपीडितः ॥ ब्राह्मणस्तमथप्राहप्रायश्चित्तंनविद्यते ॥ ४७३ ॥ महापापंत्रिरावृत्तेपुनश्चयदिचे

[1] विपयेषितम्–इ०पा० । [2] श्वासकासाविलाक्षिप्ताः–इ०पा० ।

त्कृतम् ॥ ॥ गौतमउवाच ॥ ॥ पौराणिकमहाभागप्राप्यापित्वामहंकथम् ॥ ४७४ ॥ पापयुक्तोद्विजश्रेष्ठसंगतिर्विफलाभवेत् ॥ ॥ पौराणिकउवाच ॥
शास्त्रंप्रमाणंसर्वेषांप्रायश्चित्तविनिर्णये ॥ ७५ ॥ तद्विनायोहितंब्रूयात्प्रायश्चित्तंनतद्भवेत् ॥ सकृत्कृतेसकृत्प्रोक्तंद्वितीयेद्विगुणंभवेत् ॥ ७६ ॥ तृतीये
त्रिगुणंप्रोक्तंचतुर्थेनास्तिनिष्कृतिः ॥ त्वयाकृतंतुबहुधाचतुर्विधमपीच्छया ॥ ७७ ॥ कथंवक्तुमहंशक्तःप्रायश्चित्तंभवादृशे ॥ गौतमोऽपिपुनःप्राहक्कगंतव्यं
मयेतिच ॥ ७८ ॥ पौराणिकोद्विजोरामतूष्णीमेवबभूवह ॥ गौतमोपिमहाशैलंश्रियाएवजगामह ॥ ७९ ॥ अथतत्रनदींस्नात्वादृष्ट्वेशंमल्लिका
र्जुनम् ॥ उपवासत्रयंकृत्वाशिवरात्रिमविंदत ॥ ४८० ॥ चतुर्थमुपवासंचचकारातीवदुःखितः ॥ पारणंचाप्यमायांसकृतवान्फलवल्कलैः ॥ ८१ ॥ अ
थप्रदक्षिणंचक्रेश्रीशैलस्यचसद्विजः ॥ गतवान्मंदिरंपश्चाच्चिंतयातिकृशःश्वसन् ॥ ८२ ॥ कथंपापनिवृत्तिर्मेतूष्णींभूतस्यसेत्स्यति ॥ अनंतमवि
चार्यंकिंपापंचसुमहत्तरम् ॥ ८३ ॥ श्रुत्वानकोपिमेब्रूयात्प्रायश्चित्तंविधीयताम् ॥ किंतुकस्मिन्पुराणेतुश्रुतेज्ञातंभविष्यति ॥ ८४ ॥ इतिकृत्वामतिं
सोथपुराणज्ञमभाषत ॥ पुराणमेकंमेतातव्याख्यातुभगवानिति ॥ ८५ ॥ जातकर्मादिसंस्कारान्कारयस्वममाशुवै ॥ द्विजोभूत्वाशृणोम्यद्यप्राय
श्चित्तंकरोम्यतः ॥ ८६ ॥ विधायकंपुराणंमेभविष्यतिचकीर्तितम् ॥ अतःशक्यंकरिष्यामिपुराणार्थविनिश्चयन् ॥ ८७ ॥ ॥ पौराणिकउवाच ॥ ॥
यथावत्कीर्तयिष्यामिपुराणंपापनाशनम् ॥ यथाज्ञानंयथाशक्तियथाशुद्धंयथाविधि ॥ ८८ ॥ किंवांछसिपुराणंतुकीर्तयिष्येतदेवतु ॥ ॥ गौतम
उवाच ॥ ॥ सर्वरुचिपुराणंमेवक्तव्यंकिंहितंवद ॥ ८९ ॥ श्रुतेयस्मिन्भिदानैवजायतेतुहरीशयोः ॥ ॥ पौराणिकउवाच ॥ ॥ कौर्मोक्तंयत्पुराणं
तद्द्वयोरभिदाभिधम् ॥ ४९० ॥ शृणोतियस्तत्प्रथमंतस्यपापंविनश्यति ॥ तस्यवक्तातुयोविप्रस्तस्यविघ्नांतरंभवेत् ॥ ९१ ॥ श्रोतव्यंमन्यतेपापो
यदिभार्याविनश्यति ॥ किंचैकंदुष्करंवक्ष्येश्रोतुर्वक्तुरनिंदकम् ॥ ९२ ॥ व्याख्यातरियदिप्रीतिर्द्धर्मादेवप्रकाशिनी ॥ आचारदर्शनेपुण्येकर्ममोक्षादि
दर्शके ॥ ९३ ॥ तदातुष्टोमहेशःस्याद्विष्णुरिष्टफलप्रदः ॥ पितरस्तारितास्तेनयांतितेपरमांगतिम् ॥ ४९४ ॥ इति श्रीपद्मपुराणेपाताल
खंडेशिवराघवसंवादेचतुर्दशोत्तरशततमोऽध्यायः ॥ ११४ ॥ छ ॥ ॥ श्रीरामउवाच ॥ ॥ कथंपातकसंघातसंक्रमेत्राह्मणाधमे ॥
पुराणज्ञःकथंव्याख्यांचकारद्विजसत्तम ॥ १ ॥ ॥ शंभुरुवाच ॥ ॥ अध्यापनेचाध्ययनेजायतेचाथसंगमः ॥ संगतौवत्सरंरामयातिपात
किपातकम् ॥ २ ॥ पुराणज्ञेतुकाकुत्स्थसर्वतत्वार्थवेदिनि ॥ अपिपातकसंदोहचीर्णपापंप्रणश्यति ॥ ३ ॥ प्रभूतवह्निनाशेहिधूमराशिर्यथैवहि ॥

१ चिकीर्षितम्–इ०पा० ।

शलभोदीपनाशायवह्निनाशायनप्रभुः ॥ ४ ॥ कृतंपापंतथान्येषांनाशनायपुराणिकः ॥ भूतादिग्रस्तमर्त्यानांभूतादिभयमोचकः ॥ ५ ॥ समंत्रवानपनये
द्यथानस्वयमातुरः ॥ पौराणिकस्तथापापंनकिंचित्प्राप्तुमर्हति ॥ ६ ॥ आत्मनाचकृतंपापमन्यैरपिचयत्कृतम् ॥ पुराणज्ञोनाशयतित्वतिदुर्धर्षस्वक
र्म्मवा ॥ ७ ॥ भवानीशेहृषीकेशेसमवृत्तिर्विवेकवान् ॥ लोकवेदक्रियावेत्तारुद्रजाप्यातिनिःस्पृहः ॥ ८ ॥ तुष्टःशांतःक्रियादक्षःप्रभूतोयोगकृद्वशी ॥
यथैवतेपुराणज्ञोवसिष्ठोभगवानृषिः ॥ ९ ॥ नियोगात्तवभूपालअयोध्यायामतिष्ठत ॥ अपालयद्ध्रुवंकृत्स्नांत्वांचरक्षःसमापतत् ॥ १० ॥ सचशुक्रो
पदेशेनराक्षसस्त्वामथाभ्यगात् ॥ निद्रासक्तंहनिष्यामिनान्यथात्रसरास्त्वति ॥ ११ ॥ अथविप्रोविदित्वैतद्वसिष्ठस्त्वद्धितप्रियः ॥ सुतंप्रमत्तंकाकुत्स्थं
रक्षोहंतिनसंशयः ॥१२॥ ब्रह्मावाप्तवरंतद्धिमयाकार्यंनिवारणम् ॥ इतिसंचिंत्यविप्रर्षिःसेनामादायनिर्गतः ॥१३॥ रक्षोहंतुमशक्तस्तुमृत्युहीनंततोमुनिः ॥
स्वयंचराक्षसोभूत्वावाक्यमाहमहामुनिः ॥ १४ ॥ किमर्थमागतोसीहवनंमुनिनिषेवितम् ॥ सआहराजारक्षोग्रस्तमहंहंतुमागतः॥१५॥मुनिरप्याहकिंतेन
जीवितेनमृतेनवा ॥ भुक्त्वामिषंमदीयंतुयुद्धंकृत्वाजयंव्रज ॥ १६ ॥ ॥ राक्षसउवाच ॥ ॥ कथंत्वंराक्षसोमह्यंभक्षणायभविष्यसि ॥ वसिष्ठोऽप्यथ
मानुष्यमास्थायवियतिस्थितः ॥ १७ ॥ निष्ठीव्यमस्तकेतस्यमुष्टिनातमताडयत् ॥ ताडितोराक्षसस्तेनव्यद्रावयद्दृषिश्चतम् ॥ १८ ॥ पलायमाना
वन्योन्यंजलधिंतुगतावुभौ ॥ तत्रस्थेनग्रहणोसौगृहीतोराक्षसस्तदा ॥ १९ ॥ मुनिःपुनरयोध्यायांपूर्ववत्समतिष्ठत ॥ ॥ शंभुरुवाच ॥ ॥ तस्मा
त्त्वाभिमतंकुर्यात्पुराणज्ञोविमत्सरः ॥ २० ॥ श्रवणस्यविधानंचकथयामिशुभंशृणु ॥ शुक्लपक्षेदिनेशुद्धेवारनक्षत्रयोगतः ॥ २१ ॥ करणेचापिल
ग्नेचग्रहताराबलान्विते ॥ अमूढेनग्रहेबालेनचवृद्धेगुरौस्थिते ॥ २२ ॥ नकृष्णपक्षेग्रहणेनचनास्तिकसंनिधौ ॥ पूर्वोक्तलक्षणोपेतंपुराणंशृणुया
दिति ॥ २३ ॥ शुद्धगेहेऽथवाशुद्धवेदिकायांमठेथवा ॥ नदीतीरेदेवगेहेसभामंडपएवच ॥ २४ ॥ रथ्यामठेथवारम्येपुण्यशालासुराघव ॥ स्वयंनमस्य
विप्रेंद्रान्पुराणज्ञंविशेषतः ॥ २५ ॥ आसनंकल्पितंकुर्य्याद्दूर्ध्वंसर्वविशेषितम् ॥ एहिधर्म्मासनमितिवक्तव्यंस्यादनिष्ठुरम् ॥ २६ ॥ पुराणप्रक्रमादिने
यत्कार्यंतदुदीरयेत् ॥ व्याख्यातारंपुराणस्यवस्त्राद्यैःपरिपूजयेत् ॥ २७ ॥ शुभानिदत्त्वावस्त्राणिसूक्ष्माणिचनवानिच ॥ करकंठविभूषादिपात्रमास
नमेवच ॥ २८ ॥ गंधपुष्पाक्षतैःपूज्यतांबूलंविनिवेद्यच ॥ शुक्लांबरधरंविष्णुंशशिवर्णंचतुर्भुजम् ॥ २९ ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥
सभासदश्चसंपूज्यगणेशंप्रार्थयेत्ततः ॥ ३० ॥ ॐनमेत्यादिमंत्रेणपूजनंभारतीनुतिः ॥ प्रातःकालेपुराणस्यप्रक्रमंप्रारभेदिति ॥ ३१ ॥ उपक्रम

१ मृगासक्तम्–इ०पा० । २ तांबूलंविनिवेद्यच–इ०पा० ।

दिनेरामत्रिपंचदशवाशुभ॰ः ॥ श्लोकाद्द्वितीयेदिवसेततोद्विगुणिताःशुभाः ॥ ३२ ॥ तृतीयेदिवसेरामततश्चाधिकमिष्यते ॥ दिनानामव्यवच्छेदा
द्व्याख्यानंश्रवणंतथा ॥ ३३ ॥ व्यवस्थितिर्यदाजातातदापौराणिकंगुरुम् ॥ तांबूलादिप्रदायाथपरेद्युःशृणुयादपि ॥ ३४ ॥ पुराणमेवंश्रोतव्यं
दैनंदिनमितिश्रुतिः ॥ व्रतरूपेणयःकश्चित्पुराणंशृणुयान्नरः ॥ ३५ ॥ यदेवंतत्पुराणंतुतत्रयातिनसंशयः ॥ पुराणंश्रोतुकामेनश्लोकश्चैको
पिचेच्छ्रुतः ॥ ३६ ॥ तद्दिनेतुकृतंपापंनाशयेत्तुनसंशयः ॥ ३७ ॥ एवंपुराणंशृणुयाच्चयस्तुसब्रह्महत्याकृतपापबंधात् ॥ सुरापीतिःस्वर्णहरश्चरामगुर्वंग
नागश्चविमुक्तिमेति ॥३८॥ पापानिचान्यानिकृतानिपुंभिःसर्वाणिनश्यंतिपुराकृतानि ॥ इहापियान्यब्दशतार्जितानिश्रोतुर्विनश्यंतितथाचवक्तुः ॥ ३९ ॥
कलौसमस्तविप्राणांसर्वज्ञत्वंनविद्यते ॥ विगुणापिततोव्याख्याफलदादानकर्मवत् ॥ ४० ॥ पुराणानामभिप्रायंव्यासोवेदनचापरः ॥ अहंवेद्मिविशेषे
णव्यासादपिविधेरपि ॥ ४१ ॥ नस्वाध्यायस्तपोवापिनमंत्रोनजुहोतयः ॥ फलंतिनतथातिष्येपुराणश्रवणंयथा ॥ ४२ ॥ एकैकश्रवणादेवपातकंमहदेव
तु ॥ नाशमाप्नोत्यसंदेहःश्रीशैलेवर्तनादिव ॥ ४३ ॥ अतोगुरुःपुराणज्ञःश्रोतृवंद्योऽघनाशनः ॥ नतस्मादधिकःकश्चिद्गुरुरस्तिगतिप्रदः ॥ ४४ ॥ मंत्रेषु
गुरवोयेचवेदशास्त्रेषुयेमताः ॥ नेशतेसर्वेविज्ञानंदातुंतस्मान्नबोधकाः ॥ ४५ ॥ पिशाचाःप्रायशोरामब्रह्मराक्षसनामिनः ॥ वेदमंत्रस्यवेत्तारोदृश्यंतेनपुराण
वित् ॥ ४६ ॥ पुराणविमुखोनैवसर्वःसर्वंहिपश्यति ॥ पुराणज्ञोहितस्तस्मात्पापनाशकरःप्रभुः ॥ ४७ ॥ तत्पूजासर्वपूजास्यात्सर्वद्रोहोस्यपीडनम् ॥
यथासमस्तदानानांविद्यादानंप्रशस्यते ॥ ४८ ॥ पौराणिकस्तथाधन्यस्तत्रदानंमहत्फलम् ॥ ॥ रामउवाच ॥ ॥ किंवापौराणिकेदेयंकियत्की
दृशमेवच ॥ ४९ ॥ पुराणंकीदृशंवर्ज्यैर्वर्ज्यंःकीदृक्पुराणवित् ॥ ॥ शंभुरुवाच ॥ ॥ षड्रसानन्नपानानिस्नेहद्रव्याणियानिच ॥ ५० ॥ गृहंसो
पस्करंरामपुराणज्ञायदापयेत् ॥ पर्याप्तान्येवसर्वाणिअधिकानिफलाधिकात् ॥ ५१ ॥ दद्याद्द्रव्यमतोभूयःसचैलंशोभितंमृदु ॥ भूषणानियथार्हाणिस्व
शक्त्याप्रतिपादयेत् ॥ ५२ ॥ गंधपुष्पंप्रतिदिनंकेवलंगंधमेवच ॥ केवलंचतथापुष्पंफलकालेफलान्यपि ॥ ५३ ॥ तांबूलंचतथादद्यान्नमस्कुर्याच्चभक्ति
तः ॥ पुराणस्यसमाप्तौतुदद्याद्दानादिकंतथा ॥ ५४ ॥ अधिकंतुतथादेयंभूहिरण्यादिकंनृप ॥ नचतूष्णीमुपक्रम्यश्रोतुमर्हतिकश्चन ॥ ५५ ॥
सभासद्भिःकृताचैवयापूजैकेनवाकृता ॥ देवस्थानेयथाशक्तिसर्वैःपूजनमिष्यते ॥ ५६ ॥ तीर्थेपिचयथारामपुण्येष्वायतनेषुच ॥ स्वशक्त्यापूजनं
कुर्यात्पुराणज्ञायराघव ॥ ५७ ॥ श्रोतुस्तुलक्षणंपूर्वंमयोक्तंतुभवेन्नृप ॥ पौराणिकस्यसर्वस्यलक्षणंकथयामिते ॥ ५८ ॥ कुलहीनोमहाव्या

१ राम-इ० पा० ।

धिर्महापापीतिरस्कृतः ॥ शौचाचारविहीनश्चवेदस्मृतिविवर्जितः ॥ ५९ ॥ अन्यदेवःपूतिवचोव्यंगश्चाप्यधिकांगवान् ॥ परपूर्वापतिःस्तेनःप्राणिहं
तानिराकृतिः ॥ ६० ॥ अथवर्ज्यंपुराणेतिकथयामिनृपोत्तम ॥ पूर्वंह्नैरुच्यमानंचयत्प्रोक्तंमुनिभिःपरैः ॥ ६१ ॥ व्यासादयोमुनिवरायत्प्रोचुस्तदुदीरये
त् ॥ पुराणस्थंपठेद्ग्रन्थंव्याख्यायेतविचारयन् ॥ ६२ ॥ यथाकथापिवारामभाषयादेशभाषतः ॥ नदेशभाषारचितंग्रंथंश्रुत्वाफलंलभेत् ॥ ६३ ॥
व्याख्यायाकापिकाकुत्स्थपुराणस्यहिताहिसा ॥ तस्मात्त्वंदेवयाचस्वव्याख्यास्येयत्पुराणकम् ॥ ६४ ॥ ॥ शंभुरुवाच ॥ ॥ एवंपौराणिकेनो
क्तंश्रुतवानपिगौतमः ॥ स्वयंवस्त्रत्रयंप्रादाद्ब्राह्मणायमहात्मने ॥ ६५ ॥ कौर्मंपुराणंप्रथमंश्रुतवानितिनःश्रुतम् ॥ दत्तवान्स्वर्णमधिकंवस्त्राणिचशुभानि
च ॥ ६६ ॥ अथलैंगंचशुश्रावचैष्णवंवामनंतथा ॥ पाद्मंचगारुडंचैवसौरंब्राह्ममथैवच ॥ ६७ ॥ एवमष्टसशुश्रावपुराणानिसगौतमः ॥ अथरामाय
णंचैवकौर्ममेवपुनश्चसः ॥ ६८ ॥ शिवनारायणेत्येवंजपंचक्रेसदैवहि ॥ अवापनिधनंचापिसगतोब्रह्मणःपदम् ॥ ६९ ॥ ब्रह्मासंपूज्यतंविप्रंविष्णुलोकमथा
गमत् ॥ विष्णुनापूजितःसोऽथजगामशिवमंदिरम् ॥ ७० ॥ सर्वेषामेववंद्योऽसौगौतमोमुनिसत्तमः ॥ भारतश्रवणेचापिनियमायेमयेरिताः ॥ ७१ ॥
पुराव्यासेनमुनिनात्रिवर्षाद्यत्कृतंशुभम् ॥ श्रवणात्तस्यकृत्स्नस्यव्याकर्ताभारतस्ययः ॥ ७२ ॥ नकिंचित्प्रणमेद्विप्रंमुक्त्वायोगिनमुत्तमम् ॥ सर्वेषामे
ववंद्योसौभारतंव्याकरोतियः ॥ ७३ ॥ योमहाभारतंनित्यंव्याख्यास्यतिपठेच्चवा ॥ ससर्वेभ्योधिकोविप्रस्तारयेच्चैवमानवान् ॥ ७४ ॥ व्याकरोतिचपर्वै
कंसर्वाणिकतिचित्तुवा ॥ सर्वपापविनिर्मुक्तोहव्येकव्येविशिष्यते ॥७५॥ तमेवप्रणमेद्विप्रंतमेवार्हंचपूजयेत् ॥ तमेवभोजयेन्नित्यंसर्वंतस्मैनिवेदयेत् ॥७६॥
तस्यपूजाविधिःप्रोक्तोव्याख्यानसमयेद्विजः ॥ प्रतिपूज्योऽथवस्त्राद्यैःपूजयेद्विधिमार्गतः ॥ ७७ ॥ आदिपर्वसमाप्तौचसूक्ष्मवस्त्रत्रयंददेत् ॥ सुवर्णंचयथाश
क्तिसभापर्वणिवाससी ॥ ७८ ॥ आनुशासनिकारण्यस्वर्गारोहेषुपर्वसु ॥ आदिपर्वणिपूजायासापूजानृपपुंगव ॥ ७९ ॥ कर्णाश्वमेधवैराटशल्यद्रोणेषु
पर्वसु ॥ सूक्ष्मवस्त्रत्रयंशुद्धंनिष्कद्वयमथापिवा ॥ ८० ॥ क्षुद्रपर्वस्वथान्येषुनिष्कावथसमानयेत् ॥ हरिवंशेसनिष्कंतुवस्त्रत्रितयमेवतु ॥ ८१ ॥ भारत
स्याखिलस्यैवसमाप्तौक्षेत्रदोभवेत् ॥ रामायणस्यश्रवणेकांडेकांडेप्रपूजयेत् ॥ ८२ ॥ क्षेत्रंपर्याप्तमथवासुवर्णमपिदापयेत् ॥ व्याख्यातुर्गुरुवाक्यस्यसर्वक
ल्मषनाशनः ॥ ८३ ॥ अर्थोधर्मश्चकामश्चमोक्षश्चनृपसत्तम ॥ व्याख्याश्रवणतःसर्वेसिध्यंतिचसुबुद्धयः ॥ ८४ ॥ ब्रह्महत्यादिपापानांसर्वेषामपिनाश
नम् ॥ एकेनश्रवणेनास्यकिंनरैर्नश्रुतंभुवि ॥ ८५ ॥ यानवसुसुवर्णाद्यैर्नित्यमेनंप्रपूजयेत् ॥ व्याख्यातारंयतःपापसंदोहस्यविनाशनम् ॥ ८६ ॥ अन्या

१ परभार्यापतिः—इ० पा० ।

न्यपिपुराणानिमुनिप्रोक्तानितान्यपि ॥ श्रोतॄणांपापनाशायवक्तुश्चापिविशेषतः ॥ ८७ ॥ यश्चसर्वेपुराणानिषर्ड्विंशत्तुप्रकीर्तयेत् ॥ शृणोतिवानतस्या
स्तिचित्तच्छेदःकदाचन ॥ ८८ ॥ ब्राह्मंपुराणंप्रथमंद्वितीयंपाद्ममुच्यते ॥ तृतीयंवैष्णवंचैवचतुर्थंशैवमुच्यते ॥ ८९ ॥ अथभागवतंप्रोक्तंपंचमंषष्ठ
मुच्यते ॥ भविष्यंनारदीयंचसप्तमंपरिकीर्तितम् ॥ ९० ॥ मार्कंडेयमितिप्रोक्तमष्टमंनवमंतथा ॥ आग्नेयंब्रह्मवैवर्तंदशमंपरिकीर्तितम् ॥ ९१ ॥ लैं
गंचवामनंचैवस्कांदंमात्स्यमथैवच ॥ कौर्मंवाराहमुदितंगारुडंवाथकीर्तितम् ॥ ९२ ॥ ब्रह्मांडमित्यष्टादशपुराणानिविदुर्बुधाः ॥ तथाचोपपुराणा
निकथयिष्याम्यतःपरम् ॥ ९३ ॥ आद्यंसनत्कुमाराख्यंनारसिंहमतःपरम् ॥ तृतीयमांडमुद्दिष्टंदौर्वाससमथैवच ॥ ९४ ॥ नारदीयमथान्यंचका
पिलंमानवंतथा ॥ तद्वदौशनसप्रोक्तंब्रह्मांडंचततःपरम् ॥ ९५ ॥ वारुणंकालिकाह्वानंमाहेशंसांबमेवच ॥ सौरंपाराशरंचैवमारीचंभार्गवाह्वयम् ॥ ९६ ॥
कौमारंचपुराणानिकीर्तितान्यष्टवैदश ॥ अष्टादशपुराणानांव्याकर्तातुभवेन्मनुः ॥ ९७ ॥ इति श्रीपद्मपुराणेशिवराघवसंवादेपुराणमाहात्म्यकथ
नंनामपंचदशोत्तरशततमोऽध्यायः ॥ ११५ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ संध्यावंदनकर्मक्रियतामितिरामोमुनिमाचष्टायम् ॥ उष्णद्युतिरप्यस्तमुपै
तिद्विजकुलमेतन्नीडमुपैति ॥ १ ॥ स्वयमपिसंध्यावंदनकामोऽव्रजदुत्तरदिशमुज्झितयानः॥हाहाहूहूकृतसंगीतिर्बंदीप्रमुखप्रस्तुतकीर्तिः॥२॥गौतमीतटमुपे
त्यराघवोवायुनंदनमुधौतपद्युगः ॥ जांबवत्कृतकरावलंबनःप्रापदुत्तमनदींतुगौतमीम्॥३॥करद्वयेधृतकुशःसराघवःप्रागमद्वरुणदिशामथोत्तमाम् ॥ दत्वात
तोर्घत्रितयंयथाविधिप्रहृष्टरोमाथजजापसोंतरे ॥ ४ ॥ संप्रार्थयित्वावरुणंयथाक्रमंशंभुंवसिष्ठंप्रणनामराघवः ॥ ताभ्यांकृताशीरगमन्मनःपदंहनूमताक्षालि
तपादपंकजः॥जुहावववह्नीनथवंदिमागधैःसंस्तूयमानोथविनिर्ययौबहिः॥५॥प्रहसच्चंद्रकिरणैःसुधालिप्तामिवांबरम्॥प्रसन्नताराकुसुमंवितानमिवसर्वतः ॥ ६ ॥
अथागच्छत्सौधतलंवृद्धामात्येनकल्पितम् ॥ नानासनसमोपेतंसभास्थानंययौनृपः ॥७॥ अथमुनिंद्युपवेश्यसराघवःस्वयमपिप्रथमासनमाभजत् ॥ कपि
गणाःपरितःपृथुविग्रहारचनयास्थितिमाप्रतिपेदिरे ॥ ८ ॥ सुखस्थितंनृपमभिवीक्ष्यसद्विजोवचस्तदासमुचितमाहशंभुः ॥ इहस्थितोभवतिसमस्त
पूजितःकथंकथानृपवरवर्ततेगुहायाम् ॥ ९ ॥ आकर्ण्याथरघूद्वहोद्विजवचःशुश्रूषुरासीत्कथांतत्रस्थोनिपुणंनिवार्यवचनंसर्वैःश्रुतंतत्क्षणात् ॥ शुश्रूषा
मिकथंमहाद्भुततयास्वात्माश्रयामन्यथारक्षोबाधनवादिनीमथनृपः किंत्वेतादित्याहच ॥ १० ॥ कुंभश्रोत्रवधःपुरासमजानेप्राप्तोदशास्योवधंपश्चादित्ययम
न्यथाविरचितंरामायणंभाषते ॥ कोयंविप्रवरःसमस्तजनतानास्तिकस्यसंपादकोराज्ञास्थानमुपेत्यवक्तिसमयादंब्योऽथपूज्योऽथवा॥११॥ अथाहजांबवानमुं



१ षड्विंशत्तु—इ० पा० । २ उत्तमनदीम्—इ० पा० ।

रघूत्तमंकथांप्रतिरामायणंनतावकंत्विदंद्विकल्पितंमतम् ॥ समस्तमत्रविस्तराद्वदामिदेवतच्छृणुपंकेरुहस्यसूनुतोमयाश्रुतंपुराह्यभूत् ॥ १२ ॥ जांववंतंवि
ज्ञाप्यरामचंद्रोवचनमाह ॥ १३ ॥ ॥ श्रीरामउवाच ॥ कीर्तयपुराणंमेशुश्रूषुःकुतूहलादहंप्रणीतंतत्केनचविज्ञातम् ॥ १४ ॥ जांववानथवभाषेद्वि
विधत्रिनमोनमस्तथैवविधुभूषणकेशवाभ्याम् ॥ १५ ॥ अथपुरातनंरामायणंकथयामि ॥ १६ ॥ यस्यश्रवणेनाखिलजन्मसंपादितपापक्षयोजायते ॥१७॥
अथतथापिदशरथोदशरथसमानरथीमहीयसावलेनसुमानसनामनगरजिगीषयापंकेरुहसुतसुतंवसिष्ठमाहूयनमस्कृत्यासुनिदत्तानुज्ञःशताक्षौहिणीसेनया
सहारुह्यतुरंगमंचंद्रसमानशरीरमतिरोषसमाविष्टोविष्टरश्रवसमाराध्यदंडयात्रांचकार ॥ १८ ॥ साध्योनामस्वीययासेनयावृतोदशरथाभिमुखमाययौ
योद्धुंयुद्धंचान्योन्यमभूत् ॥ १९ ॥ मासमेकंयुद्धंकृत्वादशरथस्तंसाध्यंजग्राह ॥ २० ॥ अथसाध्यसूनुर्भूषणोनामाल्पपरिवारोयुयुधेदशरथेन ॥ २१ ॥
दशरथोपिसाध्यसूनुंभुवोभूषणमवलोक्ययोद्धुमेवनैच्छत् ॥ २२ ॥ कथमेतादृशंहन्मिचास्मिन्हतेऽस्यकथंपिताभविष्यतिकथंतन्माताकथमप्रौढयौ
वनाप्रियाभार्या ॥ २३ ॥ असुष्यहिदेहेसमालिंगनचुंबनपरिवर्तननवीनतरदलारविंदपदानिकुसुमानीवदृश्यंते ॥ २४ ॥ एतत्समानवर्णवयाए
तादृशःसुभगःपरमप्रीतिवर्द्धनोनामपुत्रोभल्लूकभाक्षितोमृतःस्मृतिपथंप्राप्यापिमांरक्षयितुमिच्छतीवममहृदयमन्यथाकरोतिइतिमनसावितर्क्यातिवालकंग्र
हीतुमारभत् ॥२५॥ सचसाध्योपिपराधीनोवभूव॥२६॥सचकुमारेणसहपराजयखेदमपिमत्वासुखमध्युवासच ॥२७॥ दशरथोपितत्रमासंस्थित्वातत्पुत्रसं
दर्शनसुखमवलोक्याचिंतयत् ॥ २८ ॥ अहोसर्वदुःखापनोदनक्षममेतन्मुखावलोकनंपुत्रसंवर्द्धनंनामसर्वराष्ट्रिकोममजयःपुत्रवियोगमनुस्मरतोदुः
खायकेवलंभवति ॥ २९ ॥ तदस्यपृच्छांकरोमिकथमीदृशोजायतेपुत्रइतिवितर्क्यतमपृच्छत् ॥ ३० ॥ साध्योपिसकलमोक्षमार्गंक्षिती
शायादिशत् ॥ ३१ ॥ हरीशानौसहाराध्यसर्वैकादशीरुपोष्यद्वादशीषुब्राह्मणानाराध्यतत्तत्कालभवंफलपूर्वमन्नाद्यंव्यंजनंपुष्पंचन्यायेनसंपाद्यकापि
लाघृतेनकेशवंस्नापयित्वासुद्गचूर्णेनसंलिप्यस्वादूदकेनस्नापयित्वा सुरभिपाटीरंस्वयमुद्घृष्टंमृगनाभ्यागुरुसारेणवासमेतंदेवांगंसर्वमुपलिप्यसतुलसीदलैर्यू
थिकाकरवीरनीलोत्पलकमलकोकनदद्रोणकुसुममरुवदमनकगिरिकर्णिकाकेतकीदलपूर्वैर्यथासंभवमभ्यर्च्य द्वादशाक्षरेणपुरुषसूक्तेनवानाम्ना षोडशो
पचारेणवाराध्यप्रणम्यनृत्यंकृत्वादेवंक्षमापयेत् ॥ ३२ ॥ तथाव्रतानिविचित्राणिनारायणप्रीणनायकुर्य्यात् ॥ ३३ ॥ प्रसन्नोभगवान्सुनिरीप्सि
तंपुत्रंयच्छतितदमुमाराधयस्वेतिदशरथमुक्तवान् ॥ ३४ ॥ सचापिसाध्यंतत्रस्थाप्यगत्वायोध्यांतथासर्वंकृतवान् ॥ ३५ ॥ अथपुत्रकामेष्टौसमा ॥१६७॥
प्तायामाहवनीयाद्यज्ञमूर्तिःशंखचक्रगदापाणिरुदतिष्ठत् ॥ राजानंचवरंवृणीष्वेत्युक्तवान् ॥ ३६ ॥ सचराजा[illegible]पुत्रानतिधार्म्मिकान्दीर्घायुषश्चतुरोले

कोपकारकान्देहीति ॥ ३७ ॥ अथराजमहिष्यश्चतस्रःकौशल्यासुमित्रासुरूपासुवेपाचेति ॥ ३८ ॥ राजानमब्रुवन्देवप्रतियोपमेकेनपुत्रेणभविं
तव्यम् ॥ ३९ ॥ अथकौशल्योवाचएपयदिप्रसन्नोदेवस्तदायमुत्पद्यतांमम ॥ ४० ॥ ॥ राजोवाच ॥ ममयदिष्टंतदयंप्राथ्र्यतेहरिः ॥ विष्णोप्र
सीददेवेशकमलापतेशंखचक्रगदाधरविभीषणसृष्टिसमस्तलोकपालादिपूजितपादयुगलशाश्वतहरेनमस्तेनमस्तेएवंस्तुतोभगवानथराजानमाह ॥ ४१ ॥
॥ माधवउवाच ॥ तवपुत्रोभविष्यामिकौशल्यायाम् ॥ अथचरुंप्राविशद्धरिः ॥ तंचरुंहिचतुर्धाविभज्यभार्याभ्योदत्तवान् ॥ ४२ ॥ अथकौश
ल्यायांरामो लक्ष्मणःसुमित्रायां सुरूपायांभरतः सुवेपायांशत्रुघ्नोजज्ञेखात्पुष्पवृष्टिश्चपपात ॥ ४३ ॥ अथचतुराननःस्वयमुपेत्यजातकर्मादिकाःक्रिया
श्चक्रे ॥ ४४ ॥ त्रिभुवनाभिरामतयारामइतिनामचक्रेरूपशौर्य्यादिलक्ष्मीयोग्यतयालक्ष्मणइत्यपरस्यभुवंभारात्तारयतीतिभरतःशत्रून्हंतीतिशत्रु
घ्नइतिनामानिकृत्वाब्रह्मास्वभवनंजगामशिशवश्चवृद्धिमीयुः ॥ ४५ ॥ अथपादसंचारिणंवालचंद्रसंकाशदर्शनंविंवाधरमुन्नततिलप्रसूननासंपुरश्चूलिकालं
वमानरत्नपत्रकंश्रवणलोललंवमानकुंडलंवक्षःस्थलविचलितस्थूलमुक्ताहारंविलसत्कार्तस्वरवाहुवलयंसिंजन्मणिकंकणरत्नांगुलीयकंहेममणिरचितश्रोणि
सूत्रंसिंजन्नूपुरोपशोभितपादमंगुलीयोपशोभितपादमध्यांगुलीकंवज्रांकुशसरोजलांछनशोभितोरुपादतलंतूणीरसदृशजंघंकरिकरसदृशोरुंविस्तृतजघनं
सूक्ष्ममध्यंवर्तुलावर्तकंगंभीरनाभिमिंद्रनीलशिलाविशालवक्षःस्थलं कंवुग्रीवंचंद्रविंवसदृशवदनमर्द्धचंद्रसदृशललाटं नीलकुटिलकुंतलंक्रोडासक्तंधू
लिभिरापांडुरंफुल्लपद्मदलारक्तविलोललोचनंमहेश्वरमिवोद्धूलितभूतिंमहेश्वरमिवदिगंवरंरामंकुमारंराजादशरथोदृष्ट्वा हर्पपरिपूर्णहृदयःपुत्रमालिंग्य चुंवि
त्वावक्षस्यालिलिंगदृढम् ॥ ४६ ॥ अथकुमारोपिपार्श्वेनास्यांकमारोप्यकलकलितलोचनोयत्किंचिदुवाच ॥ ४७ ॥ याचमानमितस्ततोवीक्षमाणः
तातगच्छेशयेतातक्रीडामितातेत्यादिपुत्रसुखमनुभूयानुभूयनिर्वृतिंययौ ॥ ४८ ॥ अथकदाचिद्रोकुमागतेराजनिरामचंद्रोबालक्रीडासक्तहृदयोवहुक्री
डनकरकमलउत्प्लुत्यधावमानोनरपतिपुरःस्थितमणिखचितसुवर्णभाजनस्थमन्नंवामकरेणगृहीत्वाराजनिचिक्षेप ॥ इदमपिराजासुखायमेने ॥ एतादृशा
न्यन्यानिचकाररामचंद्रः ॥ ४९ ॥ अथकदाचित्क्रीडमानेरामेवात्याराममपातयद्रामश्चरुदन्नपतत् ॥ ५० ॥ एतस्मिन्नंतरेब्रह्मराक्षसोराममगृह्णा
द्रामश्चमूर्च्छामाप ॥ ५१ ॥ अथसहचरोबालइतस्ततोरोरूयमाणोरामंतथाविधंराज्ञेव्यज्ञापयत् ॥ ५२ ॥ अथराजाराममादायवसिष्ठमाहकिमिदं
रामस्येतिपप्रच्छ ॥ ५३ ॥ अथवसिष्ठोभस्मादायाभिमंत्र्यब्रह्मराक्षसंमोचयामास ॥ ५४ ॥ पप्रच्छकोभवानितिसचाहाहंवेदगर्वितोब्राह्मणोवहुशः
परधनमपहृत्यब्रह्मराक्षसोजातोमेनिष्कृतिंविचारय ॥ ५५ ॥ ॥ वसिष्ठउवाच ॥ ॥ इदानीमितःपरमेकवर्षशतोपभोग्यंराक्षसत्वंनरकं भागीरथी

त्पुराबलःकश्चित्सोमइत्यभिविश्रुतः ॥ तस्यपुत्रश्चमंदाख्योदशवर्षवयाअभूत् ॥२३३॥ सचाग्निपक्ककुल्माषान्घंटायांप्राक्षिपन्नृप ॥ तानभक्षयदप्येषतेन चोपहताभवत् ॥ ३४ ॥ गृहीतुमथतंवैश्यंयतमानोब्रवीदिदम् ॥ अथवैश्यःस्वयंतत्रनिश्चित्यद्रव्यशोधनम् ॥ ३५ ॥ लौकिकेकृतवाँल्लोकेव्यवहारप दश्चताम् ॥ एतेनपापयोगेनगणोघंटासुखोभवत् ॥ ३६ ॥ ॥ रामउवाच ॥ ॥ द्रव्यशुद्धेर्विशुद्धासाकथंपापस्यकारणम् ॥ सम्यगुक्तंद्रव्य शुद्ध्यैकथंनद्रव्यशोधिनी ॥ ३७ ॥ ॥ शंभुरुवाच ॥ ॥ नलौकिकव्यवहृतौतवाभक्तोभविष्यति ॥ सयातिचशिवस्थानंवक्ताचापितथा भवेत् ॥ ३८ ॥ ॥ सूतउवाच ॥ ॥ यश्चवक्तिकथामेतांसतेनसहशोभुवि ॥ गुह्याद्गुह्यतमंविप्राःशिवज्ञानप्रदंभवेत् ॥ ३९ ॥ एतद्वःकथितंविप्राः पुण्यायुष्यतमंमहत् ॥ यइदंशृणुयाद्भक्त्याशिवलोकेमहीयते ॥ २४० ॥ पुराणवक्त्रेदातव्यंवस्त्रंगोहेमभूषणम् ॥ भूमिःसस्यफलोपेतादेयाशक्त्यनु सारतः ॥ २४१ ॥ शिवराघवसंवादंसर्वाघौघनिकृंतनम् ॥ यःपठेच्छृणुयाद्वापिसयातिपरमंपदम् ॥ २४२ ॥ इति श्रीपद्मपुराणेपातालखंडेशिवराघवसं वादेउपरिभागेराममोक्षोनामसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ छ ॥ समाप्तं पंचमं पातालखण्डम् ॥ ५ ॥

---

॥ * इति श्रीपद्मपुराणे पंचमं पातालखण्डं समाप्तम् * ॥